# वाचस्पत्य

बृहत्संस्कृताभिधान

अष्टमखण्डम्

गवर्णमेण्टसंस्कृतविद्यालयस्य दर्शन-व्याकरणाध्यापकवर-

श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण

सङ्कलितम्

तेनैव संस्कृतम्

१८३२ संवत्सरे मुद्रितम् ।

# VACHASPATYA

A

COMPREHENSIVE SANSKRIT DICTIONARY

[ PART VIII. ]

[ COMPILED BY

**PROFESSOR TARANAHTA TARKAVACHASPATI** ]

CALCUTTA

THE KAVYAPRAKASHA PRESS.

Printed by Brahma Vrata Samadhyayi.

1875.

Published by Pandit Jibananda Vidyasagara B. A.
Superintendent, Free Sanskrit College Calcutta.

Advance price 80 Rs, Price of each part 6 Rs, Price to subscribeers 100 Rs.

अमरः स्त्रियां ङीप् । कफिनी तस्य भावः तल् । कफिता स्त्री त्व । कफित्व न० कफयुक्तत्वे ।

**कफेलू** पु० कफं लाति ला—कू नि० । १श्लेष्मातकतरौ उज्ज्वल० कुष्ममञ्जरी । शब्दक० कफयुक्ते त्रि० सि० कौ० "प्रमाण-तयोक्तं यदुक्तं तच्चिन्त्यं सि०कौ० "कफं लाति कफेलूः श्लेष्मातकः निपातनादेत्वम्" इत्युक्तेः तत्र तदर्थत्वा-दर्शनात् ।

**कफोणि** पुंस्त्री केन जलेन फणति इन् पृषो० ओत्वम् । भुजमध्यग्रन्थौ कूर्परे (कनुइ) अमरः । स्त्रियां वा ङीप् ।

**कफोड** पु० कफोणि+वेदे पृषो० । (कनुइ) कूर्परे । "कति स्तनौ व्यदधुः कः कफोडौ" अथ० १०,४,२,

**कव** स्तुतौ वर्णे च भ्वा०सक०प०सेट् । कवति अकवीत् चकाव कविता णिचि अचकावत् । प्रनिकवति ।

**कबन्ध** पु०कं जलं बध्नाति बन्ध—अण्, केन वायुना बध्यते, बन्ध—कर्म्मणि घञ्, कोवायुः प्राणकयुर्बध्यते संबध्यतेऽत्राधारे घञ् वा यथायथं वाक्यम् । १उदरे तस्य पीतजलनिरोधनात् तथात्वम् । २धूमकेतौ, प्रवहवायुना निचीयमानत्वात्तस्य तथात्वम् ३राहौ, तस्य छिन्नमस्तकत्वेऽपि अमृतपानात् जीवनसत्त्वेन क्रियावत्त्वात् तथात्वम् ४राक्षसभेदे च मेदि० ५जले अमरः तस्य प्राणवायुधारकत्वात् तथात्वम् "आपोमयः प्राणः" इति छा०उ० श्रुतेस्तस्य प्राणधारणकरत्वम् "पञ्चदशाहानि माऽशीः काममपः पिबापोमयः प्राणो न पिबतस्ते विच्छेत्स्यते" छा०उ० जलपानं विना प्राणविच्छेदसोक्तेस्तथात्वम् । "मनुष्याणां सहस्रेषु हतेषु हतमूर्द्धसु । तदावेशात् कबन्धः स्यादेकोऽमूर्द्धा क्रियान्वितः" इत्युक्तलक्षणे शिरःशून्ये ईक्रियायुक्तदेहे ६अस्त्री अमरः । "कबन्धाश्छिन्नशिरसः खड्गपाणिपाणयः" देवीमा० । "नागानामयुतं तुरङ्गनियुतं सार्द्धं रथानां शतं पत्तीनां दश कोटयो निपतिता एकः कबन्धोरणे । तादृक्कोटि कबन्धनर्त्तनविधौ खलञ्चलत् खे शिरस्तेषां कोटिनिपातने रघुपतेः कोदण्डघण्टारवः" प्राचीनगाथा । "यस्य नेष्यति वपुः कबन्धताम्" वल्गितोर्द्ध्वकबन्धसङ्कटः" माघः । "कश्चित् द्विषत्खड्गहृतोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य । वामाङ्गसंसक्तसुराङ्गनः स्वं नृत्यत् कबन्धं समरे ददर्श" । "उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन" रघुः । तद्देहस्य शिरःशून्यत्वेऽपि वायोः सम्यङ्निःसरणाभावेन वायुना सम्बन्धसत्त्वात् क्रियासम्भव इति बोध्यम् ७मेघे निरुक्ते ५,४ "निचीनवारं वरुणः कबन्धम्" इत्युपक्रमधिकृत्योक्तम् "कबन्धं मेघम् कवनमुदकं भवति तदस्मिन् धीयते, उदकमपि कबन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतञ्च इति" ततोक्तेः तत्र पृषो०साधुत्वम् । कबन्धराक्षसकथा च भा०व० २७३अ० यथा । "दुःखशोकसमाविष्टौ वैदेहीहरणाद्धितौ । जग्मतुर्दण्डकारण्यं दक्षिणेन परन्तपौ । वने महति तस्मिंस्तु रामः सौमित्रिणा सह । ददर्श मृगयूथानि द्रवमाणानि सर्व्वशः । शब्दश्च घोरः सत्त्वानां दावाग्नेरिव वर्द्धतः । अपश्यतां मुहूर्त्ताच्च कबन्धं घोरदर्शनम् । मेघपर्व्वतसङ्काशं शालस्कन्धं महाभुजम् । उरोगतविशालाक्षं महोदरमहामुखम् । यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् । विषादमगमत् सद्यः सौमित्रिरथ भारत ! । स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् । विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम । हरणञ्चैव वैदेह्या मम चायमुपप्लवः । राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा । नाहं त्वां सह वैदेह्या समेतं कोशलागतम् । द्रक्ष्यामि पृथिवीराज्ये पितृपैतामहे स्थितम् । द्रक्ष्यन्त्यार्य्यस्य धन्या ये कुशलाजशमीजलैः । अभिषिक्तस्य वदनं सोमं शान्तघनं यथा । एवं बहुविधं धीमान् विललाप स लक्ष्मणः । तमुवाचाथ काकुत्स्थः सम्भ्रमेष्वप्यसम्भ्रमः । मा विषीद नरव्याघ्र ! नैष कश्चिन्मयि स्थिते । छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः । इत्येवं वदता तस्य भुजो रामेण पातितः । खड्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् । ततोऽस्य दक्षिणं बाहुं खड्गेन जघ्निवान् बली । सौमित्रिरपि संप्रेक्ष्य भ्रातरं राघवं स्थितम् । पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशम् । गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः । तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः । ददृशे दिवमास्थाय दिवि सूर्य्य इव ज्वलन् । पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः । का माया किमिदं चित्रमाश्चर्य्यं प्रतिभाति मे । तस्याचचक्षे गन्धर्व्वोविश्वावसुरहं नृप ! । प्राप्तो ब्राह्मणशापेन योनिं राक्षससेविताम् । रावणेन हृता सीता राम ! लङ्काधिवासिना । सुग्रीवमभिगच्छ त्वं स ते सख्यं करिष्यति । एषा पम्पा शिवजला हंसकारण्डवैर्युता । ऋष्यमूकस्य शैलस्य सन्निकर्षे तडागिनी । वसते तत्र सुग्रीवश्चतुर्भिः सचिवैः सह । भ्राता वानरराजस्य वालिनो हेममालिनः । तेन त्वं सह सङ्गम्य दुःखमूलं निवेदय । समानशीलो भवतः साहाय्यं स करिष्यति ।

एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम्। ध्रुवं वानरराजस्य विदितो रावणालयः। इत्युक्त्वान्तर्हितो दिव्यः पुरुषः स महाप्रभः। विस्मितं जग्मतुश्चोभौ प्रवीरौ रामलक्ष्मणौ”। “बधनिर्धूतशापस्य कबन्धस्योपदेशतः” रघुः

**कबन्धिन्** पु० १ऋषिभेदे “अथ कबन्धी कात्यायन उपेत्य पप्रच्छ” प्रश्नोप०। अस्त्यर्थे इनि। २उदकयुक्ते त्रि० “अयं मृणोन मरुतः कबन्धिनः” ऋ० ५,५४,८। “कबन्धिनः उदकवन्तः” भा०। स्त्रियां ङीप्।

**कबित्थ** पु० कपयस्तिष्ठन्त्यत्र तत्फलप्रियत्वात् स्था–क पृषो० पस्य बः। कपित्थवृक्षे अमरटीका। [द्विरूपकोषः।

**कबिल** पु० कब–वर्णे इलच्। १कपिलवर्णे २तद्वति त्रि०।

**कम्** अव्य० कम–णिङभावपक्षे विच् चादि। १पादपूरणे,२जले, कप्रम्।३मस्तके ४सुखे,शब्दर०कन्तिः कन्तुः ५मङ्गले, ६निन्दायाम् शब्दचिन्ता०। “अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पादपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति” यथा “यतीत मर्त्याय कमरिणा” ऋ०४,२०,६, “कमिति पादपूरणम्”निरु० १,९, उक्तेः पादपूरणार्थता “तन्वं शपुषे दृशे कम्” ऋ० १,१२३,११,“अत्र कमिति पादपूरणे अथवा कमिति सुखवचनम् सुखं यथा भवतीति” भा०“एवेदेषा पुरुतमा दृशे कम् १,१२४,६, “कम् सुखेन” भा० “अरमयः सरपसस्तराय कमलम्” ऋ० २,१३,१२, “कं सुखेन”भा०। ७जलधारके मेघे“पिन्वसि त्वचं कं चित्”ऋ०,१,१२९,३, “कं चित् जलधारिणं मेघम्” भा०। ८सुखकरे “पचिष्ण तौग्याय कम्”ऋ० १,१८२,५, “कम् सुखकरम्” भा० ततः अस्त्यर्थे “कंशम्भ्यां बभयुस्तितुतयसः” पा० वादयः सप्त प्रत्ययाः। कंव कम्भ कंयु कन्ति कन्तु कन्त कंय एते सुखान्विते त्रि०।

**कम** वाञ्छायां भ्वा० आ०सक०सेट्। अतः स्वार्थे णिङ् आर्द्धधातुके वा। कामयते कामयीत कामयताम् अकामयत। अचीकमत। णिङभावपक्षेऽपि चङ् अचकमत। कामयाम् बभूव आस चक्रे चकमे। कामयिता–कमिता कामयिषीष्ट–कमिषीष्ट। कामयिष्यते–कमिष्यते। कामनीयः कमनीयः काम्यः। कामयितव्यः–कमितव्यः। कामी। कामयिता–कमिता कामितः कान्तः। कान्तिः। कर्त्तरि अच् कमः कर्मण्युपपदे अण्। स्वर्गकामः। उदित् कामयित्वा कमित्वा कान्त्वा। कामुकः कम्रः कमनः कामयमानः त्रि० कामयानः। काम्यते काम्यमानः। घञ् कामः सुख कामना। “नरपतिश्चकमे मृगयारतिम्”“निष्क्रष्टुमर्थं चकमे कुवेरात्” “भीमकान्तैर्नृपगुणैः” “नवं वयः कान्तमिदं वपुश्च” रघुः। “सोऽकामयत बहु स्यां प्रजायेय” श्रुतिः “रमणीकमनीयकपोलतले”सा०द०टी०।“स चेत् कामयते दातुं तव मामरिसूदन!” भा० आ०१७२। “सर्वान् कामयते यस्मात्” कन्याशब्दे उक्तम्। “प्रीत्या युक्तः कामितं सर्वशस्ते” भा० आ० ५८ “कामयाञ्चक्रिरे कान्ताः सतस्तुष्टानिशाचराः” “अकम्पनस्ततो योद्धुं चकमे रावणाज्ञया” भट्टिः। आर्षे क्वचित् पर०। “एवं रूपं नलं यो वै कामयेच्छ्रपितुं कले।” भा० व० ५८ अ०। “न च सीता दशग्रीवं मनसापि हि कामयेत्” “अकामोऽपि बलात् कामं दर्शनादेव कामयेत्” रामा०।

अनु+कामनानुरूपकामनायाम्। अनुकामयते।

अभि+आभिमुख्येन कामनायाम्। “दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये” भा०आ०१८।

नि+निःशेषकामनायाम्।“या तस्य ते पादसरोरुहार्हणं निकामयेत् साऽखिलकामलम्पटा” भाग० ५स्क०१८,२२। अतिशये च“निकामतप्ता द्विविधेन वह्निना” कुमा०

प्र+प्रकर्षेण कामनायां अतिशये। प्रकामः।

**कम** वाञ्छायां चुरा० आ०सक० सेट् उदित् कविकल्पद्रुमः। णिङन्तकमवत् सर्वम्। किन्तु तत्र उदित्प्रयोजनं चिन्त्यम्।

**कमक** त्रि० कम–णिङभावे अच् स्वार्थे क। १कामुके २गोत्रप्रवर्त्तके २ऋषिभेदे पु०। ततः गोत्रापत्ये इञ्। कामकि तद्गोत्रापत्ये पुंस्त्री बह्वच् उपका० तस्य लुक्। कमकाः कामकयः।

**कमठ** पुंस्त्री कम–अठन्। १कूर्मे कच्छपशब्दे विवृतिः स्त्रियां जातित्वात ङीष्।“कमठपृष्ठकठोरमिदं धनुः”महाना०। २विष्णोरेकादशे अवतारभेदे। “सुरासुराणामुदधिं मथ्नतां मन्दराचलम्। दध्रे कमठरूपेण पृष्ठे एकादशे विभुः” भाग० १,३,१७। ३मुनीनां जलपात्रभेदे न० विश्वः। ४वंशे पु० शब्दर०। ५दैत्यभेदे पु० हेमच०। ६शल्लकीवृक्षे पु० धरणिः।

**कमण्डलु** पुंन० मण्डनं मण्डः कस्य जलस्य मण्डं लाति–ला–कु अर्द्धर्चादि। करङ्के संन्यासिनां ब्रह्मचारिणाञ्च १जलपात्रभेदे, अमरः।“मेखलामजिनं दण्डमुपवीतं कमण्डलुम्”।“वैणवीं धारयेद्यष्टिं सोदकञ्च कमण्डलुम्”मनुः। “अशेषतीर्थोपहृताः कमण्डलोः” माघः। “कमण्डलु कपालेन शिरसा च मृजावता” भट्टिः। २प्लक्षवृक्षे,

मेदिनिः । ३चतुष्पाज्जातौ च पुंस्त्री "कमण्डलुमृद्भवचतुष्पाद्ज्जातिभेदः" सि॰कौ॰ । तस्यापत्यम् "चतुष्पाद्भ्यो ढञ्" पा॰ ढञ् "लोपोऽकद्र्वाः" पा॰ उलोपः । कामण्डलेय तदपत्ये पुंस्त्री । तस्य कर्म भावो वा युवादि॰ अण् । कामण्डलव तद्भावे तत्कर्मणि च न॰ ।

**कमण्डलुतरु** पु॰ कमण्डलुस्तदाकृतिस्तरुः कर्म॰ । १प्लक्षवृक्षे रत्नमा॰ । कमण्डलुद्रुमादयोऽप्यत्र ।

**कमन** त्रि॰ कम–णिङभावे ताच्छील्ये युच् । १कमनीये अभिरूपे २कामुके च मेदि॰ । "कन्या कमना युवतिः" सि॰कौ॰ । कमनच्छदः । "त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधानम्" (वपुः) भाग॰ १,९,३१ । करणे युच् । ३कन्दर्पे । ४अशोकवृक्षे च पु॰ मेदि॰ । ५ब्राह्मणे पु॰ हेमच॰ । [हेमच॰ । स्त्रियां ङीप् ।

**कमनच्छद** पुंस्त्री कमनः सुन्दरः छदोऽस्य । १कङ्कपक्षिणि ।

**कमनीय** त्रि॰ कम–णिङभावे कर्मणि अनीयर् । १सुन्दरे, "रमणीकमनीयकपोलतले परिपीतपटीररसैरलसः" सा॰ द॰ टी॰ । 'रुचिर' कमनीयतरा गमिता" माघः । २कामनायोग्ये वाञ्छनीये च । "अनन्यनारीकमनीयमङ्कम्" कुमा॰ । कमनीयस्य भावः "योपधाद्गुरूपोत्तमाद्वुञ्" पा॰ वुञ् । कामनीयक तद्भावे न॰ ।

**कमन्तक** पु॰ कम–बा॰ झ स्वार्थे क । ऋषिभेदे तस्य गोत्रापत्यम् इञ् । कामन्तकि तद्गोत्रापत्ये पुंस्त्री बहुत्वे उपका॰ इञो लुक् । कामन्तकयः कमन्तकाः ।

**कमन्ध** न॰ जले रायमुकुटेपरमतेनोक्तम् । तत्र हि कबन्धमिति स्वयं व्याख्याय कमन्धम् इति समध्यपाठे कम् अन्धम् इति नामद्वयमेकीयमतेनोक्त्वा कमन्धमित्येकं नाम परमतत्वेनोक्तम् ।

**कमर** त्रि॰ कम–णिङभावे अरच् । कामुके उज्ज्वल॰

**कमल** न॰ कम–इषादि॰ कलच् । १पद्मे तद्भेदस्य तदवयवभेदस्य च गुणादि भावप्र॰ उक्तं यथा

"कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् । विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् । धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकम् । मूलनालदलोत्फुल्लफलैः समुदिता पुनः । पद्मिनी प्रोच्यते प्राज्ञैर्बिसिन्यादिश्च सा स्मृता । आदिशब्दान्नलिनी कमलिनीत्यादि । पद्मिनी शीतला गुर्वी मधुरा लवणा च सा । पित्तासृक्कफनुद्रूक्षा वातविष्टम्भकारिणी । अथ नवपत्रादि । संवर्त्तिका नवदलं बीजकोषस्तु कर्णिका । किञ्जल्कः केशरः प्रोक्तः मकरन्दो रसः स्मृतः । मृणालं पद्मनालं स्यात्तथा बिसमिति स्मृतम् । संवर्त्तिका हिमा तिक्ता कषाया दाहतृट्प्रणुत् । मूत्रकृच्छ्रगुदव्याधिरक्तपित्तविनाशिनी । पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा । मुखवैशद्यकृल्लघ्वी तृष्णास्रकफपित्तनुत् । किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपि सः । कफपित्ततृषादाहरक्तार्शोविषशोथजित् । मृणालं वृष्यमधुरं पित्तदाहास्रजिद्गुरु । दुर्जरं स्वदुपाकञ्च स्तन्यानिलकफप्रदम् । संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम्" । "नवावतारं कमलादिवोत्पलम्" रघुः । "प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः" "धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि" मेघ॰ "अमलकमलराशेः" लीला॰ "न कमलं कमलश्रयदम्भसि" माघः । कमलयोनिः कमलासनः । २क्लोम्नि ३भेषजे ४सलिले ५ताम्रे हेम॰ ६मृगभेदे पुंस्त्री स्त्रियां ङीष् ७लक्ष्म्यां ८वरनार्यां स्त्री मेदि॰ । ९सारसपक्षिणि अमरः कमलनामनामत्वात्तस्य स्त्रियां ङीष् । १०स्वनामख्याते जम्बीरभेदे स्त्री "रम्भाफलं तिन्तिडीकं कमलानागरङ्गकम् । फलान्येतानि भोज्यानि एभ्योऽन्यानि विवर्जयेत्" तन्त्रसा॰ पुरश्चरणनियमे । तद्गुणाश्च भावप्र॰ उक्ता यथा । "मिष्टनिम्बूफलं स्वादु गुरु मारुतपित्तनुत् । गररोगविषध्वंसि कफोत्क्लेशि च रक्तहृत् । शोषारुचितृषाच्छर्दिहरं बल्यञ्च बृंहणम्" ११मिथिलास्थे नदीभेदे स्त्री । १२छन्दोभेदे स्त्री । तल्लक्षणं वृत्तरत्नावल्यां द्विधोक्तम् यथा "द्विगुणजगणसहितः सगणद्वय हि विहितः । फणिपतिमतिविमला क्षितिप ! भवति कमलेति" "दशभिः प्रमिता सगणाविहिताः पुनरेकमितोनिहितोगुरुरन्ते । यदि सत्कवयोविलसन्मतयोऽभिधया कमलेति तदाकलयन्ते" (गोलापी) १३पाटलवर्णे १४तद्वति त्रि॰ । "यवलाय स्वाहा कमलाय स्वाहा पृश्नये स्वाहा तैत्ति॰ ७,३,१८,१ । अस्य गणपठनत्वात् स्त्रियां बह्वादि॰ वा ङीष् । कमली कमलानां संघः षण्ड । कमलखण्ड पद्मसंघे न॰ तस्य देशः पुष्क॰ इनि । कमलिनी भावप्र॰ उक्ते बीजकोषादौ स्त्री "कमलिनीमलिना दिवसात्यये" उद्भटः । "उत्क्षोभवयतालेन मधुमध्ये स्फुरेद्गुरुः । सम्पदयावर-

युक्तः कमलोऽयं भयानके"सङ्गीतदामोदरः ।५ मृगभेदे पु०

**कमलकीट** पु० कमलवर्णः कीटः । कीटभेदे तत्र भवादौ पलद्या० अण् । कामलकीट तद्भवे त्रि० ।

**कमलकीरक** पु० कमलवर्णः कीर इव कायति कै–क । कीटभेदे तत्र भवादौ पलद्या० अण् । कामलकीरक तद्भवे त्रि० ।

**कमलज** पु० कमलात् विष्णोर्नाभिकमलात् जायते जन–ड । १ब्रह्मणि चतुर्मुखे कञ्जजशब्दे विवृतिः । "अस्त्रियमदृष्ट्वा कमलजगर्वगिम्मलभूदिति" हरनर्त० । तदभेदात् २रोहिणीनक्षत्रे च तस्य तदधिष्ठितत्वात्तथात्वम् । ३पद्मजातमात्रे मध्वादौ त्रि० । कमलजातपद्मजातादयोऽप्यत्र ।

**कमलभिदा** स्त्री ६त० । कमलपाटने ततो भवादौ पलद्या० अण् । कामलभिद तद्भवे त्रि० ।

**कमलयोनि** पु० कमलं विष्णुनाभिकमलं योनिरुत्पत्तिस्थानमस्य । १चतुर्मुखे ब्रह्मणि । कञ्जजशब्दे विवृतिः । पद्मयोन्यादयोऽप्यत्र । ६त० । २कमलानामुत्पत्तिस्थाने स्त्री ।

**कमलबीज** न० ६त० । (कमलगट्टा) पद्माक्षे भावप्र० तद्गुणा उक्ता यथा "पद्मबीजं हिमं स्वादु कषायं तिक्तकं गुरु । विष्टम्भि वृष्यं रूक्षञ्च गर्भसंस्थापकं परम् । कफवातहरं बल्यं ग्राहि पित्तास्रदाहनुत्" ।

**कमलाकर** पु० कमलानामाकरः उत्पत्तिस्थानम् । १पद्माकरे तड़ागे । २पद्मानां समूहे च । "हरिदश्वः कमलाकरानिव" रघुः । कमलाकरभट्टनिर्मिते ३स्मृतिनिबन्धभेदे ।

**कमलादि** त्रि० वार्त्तिकोक्ते संचार्थे खज्प्रत्ययनिमित्ते शब्दगणे स च गणः "कमल अम्भोज पद्मिनी नलिनी कुमुद सरोजपद्म नलिन कैरविणी" आकृतिगणः तेन कदलीखण्डमित्यादि सिद्धिः ।

**कमलापति** पु० ६त० । नारायणे समुद्रात् लक्ष्म्या आविर्भूतिमुपवर्ण्य तया विवेचनापूर्वकं नारायणस्य पतित्वेन वरणं भाग० ८,८ अ० वर्णितं यथा

"ततस्ततो नूपुरवल्गुशिञ्जितैर्विसर्पती हेमलतेव सा बभौ । विलोकयन्ती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् । गन्धर्वसिद्धासुरयक्षचारणत्रैपिष्टपेयादिषु नान्वविन्दत । नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न सङ्गवर्जितम् । कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतोव्यपाश्रयः । धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् । वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं न हि द्वितीयो गुणसङ्गवर्जितः । क्वचिच्चिरायुर्न हि शीलमङ्गलं क्वचित्तदप्यस्ति न वेद्यमायुषः । यत्रोभयं कुत्र च सोऽप्यमङ्गलः सुमङ्गलः कश्च न काङ्क्षते हि माम् । एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतागुणाश्रयम् । वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुन्दं निरपेक्षमीप्सितम् । तस्यां स देश उषती नवकञ्जमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् । तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता । तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षोनिवासमकरोत् परमं विभूतेः । श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् । शङ्खतूर्यमृदङ्गानां वादित्राणां पृथक् स्वनः । देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् । ब्रह्मरुद्राङ्गिरोमुख्याः सर्वे विश्वसृजो विभुम् । ईडिरेऽवितथैर्मन्त्रैस्तल्लिङ्गैः पुष्पवर्षिणः । श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः । शीलादिगुणसम्पन्ना लेभिरे निर्वृतिं पराम् । निःसत्वा लोलुपा राजन्निरुद्योगा गतत्रपाः । यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः" । पद्मापतिकमलाकान्तादयोऽप्यत्र ।

**कमलालया** स्त्री कमलमालयो यस्याः । लक्ष्म्याम् ।

**कमलारुख** पु० ६त० । नारायणे "सान्यमाप कमलासखविश्वक्सेनेनेत्यादि" माघः ।

**कमलासन** पु० कमलमासनं यस्य । चतुरानने ब्रह्मणि । "क्रान्तानि पूर्व्वं कमलासनेन" कुमा० ।

**कमलासनस्थ** पु० कमलं विष्णोर्नाभिकमलरूपमासनम् । तत्र तिष्ठति स्था–क । विधातरि यथा च तस्य विष्णुनाभिकमले स्थितिस्तथा कञ्जजशब्दे उक्तम् ।

**कमलिनी** स्त्री कमलानां देशः "पुष्करादिभ्योदेशे" पा० पुष्क० इनि । १कमलाधारदेशे पद्माकरे शब्दर० २कमलसमुदायरूपपद्मलतायाञ्च । "पुष्पिताः कमलिनीरिव द्विपः" रघुः

**कमलोत्तर** न० कमलमिवोत्तरस्तत्रकत्वम् । कुसुम्भपुष्पे अमरः

**कमा** स्त्री कम–णिङ्भावे बा० स्त्रियां भावे अ । शोभायाम् राजनि० ।

**कमित्र** त्रि० कम–णिङभावपक्षे तृच् । कामुके स्त्रियां ङीप् । कमित्री "अनुकामिकाभीकाः कमिता" पा० । अतिशयेन कमिता ईयसुन् तृणोलोपः । कमीयस् कान्ततरे त्रि० स्त्रियां ङीप् । इष्ठन् कमिष्ठ कान्ततमे त्रि०

**कम्प** पु० कपि–चलने घञ् । गात्रादिकम्पे १वेपथौ । "यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः" भाग० ३,७,११

कम्पनञ्च तच्च वातादिना शरीरस्य स्थावरस्य भूम्यादे-र्भवति देहादेस्तु मनसोविकारभेदेन वातादिधातुना च चालनात् भवति । स च रसविशेषे निर्वेदादिव्यभिचारि भावविशेषजन्यः यथोक्तं सा० द० निर्वेदादिव्यभिचारि-भावान् विभज्य तेषां लक्षणाभिधाने "आवेगः सम्भ्रमस्तत्र" इत्युपक्रम्य "गजादेः स्तम्भकम्पादिः"। "शौर्यापराधादिभवं, भवेद्गर्वत्वमुग्रता । तत्र स्वेदः शिरःकम्पतर्जनाताडना-दयः"। मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः । भूपा-तकम्पप्रस्वेदफेनलालादिकारकः"। "निन्दाक्षेपापमानादेर-मर्षोऽभिनिविष्टता । नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादि कृत्"। "परक्रौर्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम् । वै-वर्ण्यकम्पवैस्वर्य्यभूमीक्षोत्कम्पनादिकृत्" । "शीत विद्युदुल्काद्यैस्त्रासः कम्पादिकारकः"। "रत्यायासमनस्ताप-क्षुत्पिपासादिसम्भवा । ग्लानिर्निष्प्राणता कम्पकार्श्यानुत्-साहतादिकृत्" । कम्पश्च भयानकरसस्यानुभावः यथाह तत्रैव भयानकं प्रकृत्य "अनुभावोऽत्र वैवर्ण्यगद्गदस्वरभाषणम् । प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः"। रौद्ररसस्य व्यभि-चारिभावश्च यथाह तत्रैव रौद्रं प्रकृत्य "उग्रतावेगरोमाञ्च स्वेदवेपथवो मदः। मोहामर्षादयश्चात्र भावाः स्युर्व्यभिचारि-णः"। शृङ्गारादौ तु तदीयव्यभिचारिभावभेदेनैव कम्पादि जन्यते इति भेदः । ज्वरादिजातकम्पस्तु वैद्यके प्रसिद्धः । तद्धेतुतिर्य्यक् [illegible] द्रष्टव्या । दिङ्मात्रमुक्तं भावप्र० "व्यथा-वेपथुनिद्रानाशविष्टम्भादयो वातजाः"। शीतानिलेन च दे-हस्य कम्पो जायते । अतएव "सहसा सहसा कृतवेपथुः" माघे वर्णितम् ।

कम्पन त्रि० कपि–युच् । १कम्पयुक्ते । भावे ल्युट् । २चलने न० मेदि० । णिच्–युच् । ३कम्पयितरि त्रि० "दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः"। दुन्दुभिपूजामन्त्रः । "प्रक-म्पनेनानुचकम्पिरे सुराः" माघः "प्रबलता जगतामपि भर्म-णां हृदयकम्पनम्" भा० आ० ४७अ०। ४शिशिरे ऋतौ पु०। ५अस्त्रभेदे च । "प्रादेशस्या गदाभिश्च परिघैः कम्पनैस्तथा" "अद्भुता गद्गदा वाचो रात्रौ निद्रा भवत्यपि । प्रस्तब्धे नयने चैव लालास्रावमेव च । कपोलपक्ष्म विलुप्तानि सन्निपातस्य लक्षयेत् । मुनिभिः सन्निपातोऽयमुक्तः कम्प-नसंज्ञकः" भावप्र० उक्ते ६सान्निपातिकज्वरभेदे पु० ।

कम्पलक्ष्मन् पु० कम्पःचलं लक्ष्म यस्य । वायौ त्रिका० तस्य स्था-वरादीनां चलनहेतुत्वात् तथात्वम् ।

कम्पा स्त्री कपि–भावे अ । चलने हेमच० [हेमच० ।

कम्पाक पु० कम्पया चलनेन कायति प्रकाशते कै–क । वायौ

कम्पित न० कपि–भावे क्त । १कम्पे शब्दच० कपि–णिच् भावे क्त । २चालने "अशोकशाखाकम्पितपुष्पगन्धिः" रघुः कर्त्तरि क्त । ३कम्पयुक्ते त्रि० । णिच्–कर्म्मणि क्त । ४चालिते त्रि० "अतिचपलकपिकुलकम्पितकम्पिलकाग्रपत-त्फलप्रसरवर्षैः" काद० "आद्यकोदरदर्शितां प्रकम्पनैः कम्पि-ताम्" माघः।

कम्पिन् त्रि०कम्प–णिनि । १कम्पयुक्ते णिच् णिनि । २कम्प-यितरि "गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः । अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" शि०त० पु०।

कम्पिल पु०कम्प–इलच् । रोचन्याम् (कमलागुड़ि) अमरः। पृषो० कम्पीलकम्पिल्लयवावपि तत्रार्थे रायमुकुटादयः ।

कम्पिल्ल पु० कपि–इल्ल । रोचने वृक्षभेदे । "कम्पिल्लः कर्क-शश्चन्द्रो रक्ताङ्गोरोचनोऽपि च । कम्पिल्लः कफपित्तास्रकृमि गुल्मोदरव्रणान् । हन्ति रेची कटूष्णश्च मेहानाहवि-षाश्मनुत्" भावप्र०।२नगरभेदे "देवीं कम्पिलवासिनीम्" यजु०२३,१८, काम्पीलेति पाठान्तरम् । काम्पीले नगरे वासिनीम्" वेददी० कम्पिल्ल वृक्षचकरञ्जभेदः (बाटाकर-ञ्जा) इत्येके "अतिचपलकपिकुलकम्पितकम्पिलकाग्रपतत्फ-लप्रसरवर्षैः" काद० स्वार्थे कन् कम्पिल्लकोऽप्यत्रार्थे ।

कम्प्य त्रि० कपि–णिच् कर्म्मणि यत् । चालनीये "शत्रुभिर्न इवाकम्प्यः" रामा० ।

कम्प्र त्रि० कपि–र । कम्पशीले "विधाय कम्प्राणि मुखानि कम्पति" नैष० । [ प्रतिकम्पति

कम्ब गतौ भ्वा० पर०सक०सेट् । कम्बति अकम्बीत् चकम्ब

कम्बर पु०कम्ब–अरन् । १चित्रवर्णे २तद्वति त्रि० शब्दर०।

कम्बल पु०कम्ब–कलच् कं, कुत्सितं शिरोऽम्बु वा बलति वल संवरे अच् वा ।१सर्पभेदे २गवादेर्गलस्थलोमवृत्तसास्नायां, ३प्रावारे, ४कृमौ च । ५ऊर्णानामकात लोमनिर्म्मिते वस्त्रासनादौ, ६जले न० ७उत्तरासङ्गे च मेदि० । ८मृग-भेदे पुं स्त्री० जटा० स्त्रियां ङीप् ।"न तथा सुखयत्यग्निर्न प्रा-वाराश्च कम्बलाः"रामा०।"कम्बलवन्तं न बाधते शीतम्"। विदग्धमु० । कम्बलनामा नागलोकपतिः "ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शङ्खकुलिकम-हाशङ्खश्वेतधनञ्जयधृतराष्ट्रशङ्खचूडकम्बलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसन्ति" भाग० ५,२४,४२ । "कम्बलाश्वतरौ चापि नागः कालीयकस्तथा" भा० आ० ३५,नागनामकीर्त्तने । अयञ्च वरुणसभास्थः "कम्बलाश्वतरौ

च करणस्य विशेषः तदुक्तं "द्रव्यादिविषयो हेतुः करणं चरितक्रियम्"। चरितक्रियं व्यापारद्वारा क्रियामात्रविषयम् इत्यर्थः। "खराणामुग्रपाश्वेव विहितं करणं स्मृतम्" मिता०। "निषक् कर्त्ताथ करणं रसाद्दोषाश्च कारणम्" सुश्रु०। "न तस्य कार्य्यं करणञ्च विद्यते" श्रुतिः ७ इन्द्रिये अमरः तस्य ज्ञानक्रियायाम् साधनत्वात्तथात्वम्। यथा च इन्द्रियाणां ज्ञानक्रियायां साधनत्वं तथा इन्द्रियशब्दे उक्तम्। तच्च सांख्ये त्रयोदशविधमित्युक्त्वा तेषां मध्ये अन्तःकरणानां द्वारित्वमितरेषां द्वारत्वमुक्तं यथा सां० का० कौ०

"करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम्। कार्य्यञ्च तस्य दशधाहार्य्यं धार्य्यं प्रकाश्यञ्च" का० "करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणम्। न च व्यापारावेशं विना कारकत्वमिति व्यापारमाह तदाहरणधारणप्रकाशकरम् तत्र कर्म्मेन्द्रियाणि वागादीन्याहरन्ति यथास्वमुपाददते स्वव्यापारेण प्राप्नुवन्तीति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति, बुद्धीन्द्रियाणि प्रकाशयन्ति। आहरणधारणादिक्रियाणां सकर्म्मकतया किं कर्म्म, कतिविधं? चेत्यत आह कार्य्यञ्च तस्येति तस्य त्रयोदशविधस्य करणस्य दशधा आहार्य्यं धार्य्यं प्रकाश्यञ्च कार्य्यम्। आहार्य्यं व्याप्यं कर्म्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दश इत्याहार्य्यं दशधा। एवं धार्य्यम् अप्यन्तःकरणादि लक्षणया वृत्त्या शरीरं, तच्च पार्थिवादि पाञ्चभौतिकं शब्दादीनां पञ्चानां समूहः पृथिवीति, ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा। एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति" कौ० "अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्" का० "अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्। दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रियाण्यालोचनेन, कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण। बाह्यान्तरयोः करणयोर्विशेषान्तरमाह साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्, साम्प्रतकालं वर्त्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपि वर्त्तमानम् अतो वागपि वर्त्तमानकालविषया भवति। त्रिकालमाभ्यन्तरं करणं तद्यथा नदीपूरभेदाद्वृष्टिः, अस्ति धूमादग्निरिह नगनिकुञ्जे, असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति, तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति। कालश्च वैशेषिकाभिमत एको न अनागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रपद्यते सन्तु त एवोपाधयोऽनागतादिव्यवहारहेतवः, कृतमत्रान्तर्गडुना कालेनेति सांख्याचार्य्याः। तस्मान्न कालरूपतत्त्वान्तराभ्युपगम इति" कौ० साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति। "बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि। वाग्भवति शब्दविषया शेषाणि तु पञ्चविषयाणि" का० "बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि विशेषाः स्थूलाः शब्दादयः शान्तघोरमूढाः पृथिव्यादिरूपाः, अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः विषयपदत्वेन भूतभाविनावपाकरोति विशेषाश्चाविशेषाश्च विशेषाविशेषास्त एव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि। तत्रोर्द्ध्वस्रोतसां योगिनाञ्च श्रोत्रं स्थूलशब्दतन्मात्रविषयं, स्थूलशब्दविषयमेव नः। एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया, अस्मदादीनान्तु स्थूलस्पर्शविषयैव। एवं चक्षुरादयोऽपि तेषामस्मदादीनाञ्च रूपादिषु द्रष्टव्याः। एवं कर्म्मेन्द्रियेषु मध्ये वाग्भवति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् न तु शब्दतन्मात्रस्य हेतुः तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात्। शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयाणि पाण्यग्राह्याहार्य्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति" कौ०। साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित् प्रधानभावं सहेतुकमाह। "सान्तःकरणा बुद्धिः सर्वं विषयमवगाहते यस्मात्। तस्मात्त्रिविधं करणं द्वारि द्वाराणि शेषाणि" का०। "द्वारि प्रधानं शेषाणि करणानि बाह्येन्द्रियाणि द्वाराणि तैरुपनीतं सर्वं विषयं समनोहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति तस्माद्बाह्येन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति" कौ०। "न केवलं बाह्यानीन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपि तु ये अप्यहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह। "एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः। कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति" का०।

"यथा हि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्वाध्यक्षाय, स च भूपतये, तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायाम्, तदिदमुक्तं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति। बाह्येन्द्रियमनोऽहङ्काराश्च गुणविशेषाः गुणानां सत्त्वरजस्तमसां विकाराः। ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः यथा वर्त्तितैलवह्नयः सन्तमसापनयनरूपप्रकाशाय मिलिताः प्रदीपाः, एवमेते गुणविशेषा इति योजना"।

न्यायादिमते इन्द्रियाणामेकादशविधता वेदान्तपरिभाषामते दशविधतेति भेदः इन्द्रियशब्दे उक्तः। "वपुषा करणोज्झितेन सा" "करणापायविभिन्नवर्णया" रघुः। "करणैरन्वितस्यापि पूर्वज्ञानं कथञ्चन" याज्ञ०। "आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या" वेणी०। अत्र करणं बाह्येन्द्रियम्। आधारे ल्युट्। २क्षेत्ररूपे देहे अमरः करणाश्रयत्वात् तस्य तथात्वम्। "उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया" कुमा०। भावे ल्युट्। ४क्रियायाम्। "प्र ते पूर्व्वाणि करणानि" ऋ० ४,१९,१०। "आवाहनाग्नौकरणरहितमपसव्यवत्" याज्ञ०। "कृतस्य करणे चापि व्याहृताः सर्वशिल्पिनः" भा०व०२५४अ०। "कृतस्य करणं नास्तीति" प्राचीनगाथा। ५वैतिककर्माङ्गे अनुष्ठाने ६व्यापारमात्रे च। ७ज्योतिषोक्तेषु तिथ्यर्द्धात्मकेषु ववादिषु तेषामानयनप्रकारः सूर्य्यसि०रङ्गना० उक्तो यथा।

"ध्रुवाणि शकुनिर्नागं तृतीयं तु चतुष्पदम्। किंस्तुघ्नं तु चतुर्दश्याः कृष्णायाश्चापरार्द्धतः" सू० सि०। "कृष्णपक्षीयायाश्चतुर्दश्यास्तिथेर्द्वितीयार्द्धाद्द्वितीयार्द्धमारभ्येत्यर्थः। चकार एवार्थे। तेनान्यतिथेरेतत्तिथिपूर्वार्धस्य च निरासः। ध्रुवाणि स्थिराणि करणानि। तान्याह। शकुनिरिति। चतुष्पदं तृतीयमित्यनेन शकुनिनागयोः क्रमेणाद्यद्वितीयत्वं सूचितम्। तुकारात् क्रमेण तिथ्यर्धेषु भवन्ति। किंस्तुघ्नं चतुर्थम्। तुरन्तार्थद्योतकः तेनोक्तातिरिक्तं स्थिरकरणं नास्तीति सूचितम्। अथ चरकरणान्याह" रङ्ग०। "ववादीनि ततः सप्त चराख्यकरणानि च। मासेऽष्टकृत्व एकैकं करणानां प्रवर्त्तते" सू० सि०। "ततः स्थिरकरणपूर्वमनन्तरं ववादीनि चराख्यककरणानि सप्त शुक्लप्रतिपद्द्वितीयार्धतश्चतुर्दश्यन्तं भवन्तीति वार्थः। ननु पञ्चम्यादितः कानि करणानि भवन्तीत्यत आह मासे इति। चरकरणानां ववादीनां सप्तानां मध्ये एकैकमेकमेकं करणं मासे स्थिरकरणकालोनितत्रिंशत्तिथ्यात्मकमासे सप्तानामावृत्त्याष्टरूपम्। अष्टकृत्वोऽष्टवारः प्रवर्त्तते प्रकर्षेण तिष्ठति भवतीत्यर्थः। तथा च पञ्चम्याद्यर्धेतानि पुनः पुनः परिभ्रमन्ति। कृष्णचतुर्दश्याद्यार्धपर्यन्तमिति भावः। ननु स्थिरकरणोक्तापरार्धत इत्युक्त्या तेषां चतुर्णां तिथ्यर्धभोगेन शुक्लप्रतिपदाद्यर्धपर्यन्तं क्रमेणावस्थानं युक्तं चरकरणानां तु केवलोक्त्या तदनन्तरं कृष्णचतुर्दश्याद्यार्धपर्यन्तमेक एव परिभ्रमोऽभिव्यक्तस्तदुत्तरं कथयन्नन्यदप्याह" रङ्ग०। "तिथ्यर्द्धभोगं सर्वेषां करणानां प्रकल्पयेत्। एषा स्फुटगतिः प्रोक्ता सूर्यादीनां खचारिणाम्" सू० सि०। "सप्तानां चरकरणानां प्रत्येकं तिथ्यर्धकालो भोगस्तं तिथ्यर्धकालमितावस्थानं प्रकल्पयेत्। "एकत्र निर्णीतः शास्त्रार्थोऽपरत्र भवतीति" न्यायात् करणत्वेनैषामवस्थानं तुल्यं कुर्यादित्यर्थः। अत एव "तिथ्यर्धं करणं स्मृतम्" इत्युक्त्या चान्द्रमासे त्रिंशत्तिथ्यात्मके षष्टिकरणानां सन्निवेशाच्चरकरणानामेव परिभ्रमणे प्रतिमासमनियततिथिभोगकं करणं भवतीति तद्वारकप्रतिमासनियततिथिभोगककरणकसिद्ध्यर्थं चरकरणानामष्टवारपरिभ्रमणोत्तरमवशिष्टतिथ्योश्चतुर्ष्वर्धेषु स्थिरकरणान्युक्तानीति तात्पर्यम्। तत्रापि कृष्णचतुर्दश्यपरार्धतस्तत्कल्पनं तदिच्छानियामकं स्वतन्त्रेच्छस्य नियोगानर्हत्वात्" रङ्ग०

करणानि च ववबालवकौलवतैतिलगरवणिग्विष्टिभद्राख्यानि सप्त चरकरणानि। स्थिरकरणानि शकुन्यादीनीति एकादश संख्यानि। ८जातिभेदे पुंस्त्री अमरः स्त्रियां जातित्वात् ङीष्। तज्जातिश्च व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्नः जातिभेदः "झल्लो मल्लश्च राजन्यात् व्रात्यान्निच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड एव च" मनुः। करणरूपवर्णसङ्करस्यैव कायस्थनामता तस्य कर्मविशेषपरिपाकेण तज्जातिप्राप्तिस्तस्य वृत्तिभेदश्च ब्रह्मवै०पु०जन्मखण्डे ८५ उक्तो यथा। "तैलचौरस्तैलकीटो भूत्वा कीटत्रिजन्मकम्। ततो भवेत् स्वर्णकारो जन्मैकं दुष्टमानसः। ततः कुण्डे वर्षशतं स्थित्वा स्वर्णवणिग् भवेत्। जन्मैकञ्च दुराचारो जन्मैकं करणो भवेत्। विश्वकविपिकर्त्ता च भक्ष्यदातुर्धनं हरेत्। कायस्थो मोदरस्थोऽपि मातुर्मांसं न खादितम्। तत्र नास्ति कृपा तस्य दन्ताभावेन

कोत्तमम् । स्वर्णकारः स्वर्णवणिक् कायस्थश्च प्रजेश्वर ! । नरेषु मध्ये ते धूर्त्ताः कृपाहीना महीतले । हृदयं क्षुरधाराभं तेषाञ्च नास्ति सादरम् । शतेषु सज्जनः कोऽपि कायस्थो नेतरौ च तौ । सुबुद्धिः शिवभक्तश्च शास्त्रज्ञो धर्म्ममानसः" । ९ वर्णसङ्करजातिभेदे पुंस्त्री "शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः" ब्रह्मवै० पु० । कायस्थश्च चतुर्विधः प्रात्यक्षत्रियः शूद्रावैश्ययोर्जातः करणनामा प्रसिद्धः अम्बष्ठः चित्रगुप्तजातश्चैवाक्तनश्च । कायस्थखण्डे विवृतिः । तस्य वृत्तिमाह पराशरः । "धनधान्याध्यक्षता च राजसेवा तथैव च । द्विजातेः परिचर्य्या च दुर्गान्तःपुररक्षणम् । एषा पाराशरेणोक्ता उग्रस्य करणस्य च प्रोक्ता उत्तमता वृत्तिरुभयत्र शुभप्रदा" । "नृत्यवादित्रगीतानां प्रयोगस्थभेदिनाम् । संस्थानं ताडनं रोधः करणानि प्रचक्षते" राजकन्दर्पोक्ते तालव्यपस्थापके १० ताडनाविशेषे न० "शिखरासक्तमेघानाम् व्यज्यन्ते यत्र वेश्मनाम् । अनुगर्ज्जितसन्दिग्धाः करणैर्मुरजस्वनाः" कुमा० सर्वकरणप्रयोक्तृत्वात् ११ परमेश्वरे न० "करणं कारणं कर्त्ता विकर्त्ता च मतो गुरुः" विष्णुस० । भवाद्यर्थे ततः कामा० ठञ् ञिठ च इकार उच्चारणार्थः । कारणिक तद्भवे स्त्रियां ठञि ङीप् ञिठि टाप् । १२ क्रियासाधनस्त्रियां स्त्री ङीप् । क्रियते क्रियाविशेषोऽस्याम् आधारे ल्युट् ङीप् । बीजगणितोक्ते यस्य वर्गमूलादिकं स्पष्टं न प्रतीयते तत्क्रिया विशेषद्वारा तत्करणविषये राशिभेदे स्त्री । सा च षड्विधा सङ्कलनव्यवकलनगुणभागवर्गवर्गमूल रूपभेदात् । तत्क्रियाविशेषो बीजगणिते दर्शितो यथा । "अथ करणी षड्विधा । तत्र सङ्कलनव्यवकलनयोः करणसूत्रं वृत्तद्वयम् । योगं करण्योर्महतीं प्रकल्प्य वधस्य मूलं द्विगुणं लघुञ्च । योगान्तरे रूपवदेतयोः स्तोवर्गेण वर्गं गुणयेद्भजेच्च । लघ्व्या हृतायास्तु पदं महत्याः सैकं निरेकं स्वहतं लघुघ्नम् । योगान्तरे स्तः क्रमशस्तयोर्वा पृथक् स्थितिः स्याद्यदि नास्ति मूलम् । उदाहरणम् । द्विकाष्टमित्योस्त्रिभसङ्ख्ययोश्च योगान्तरे ब्रूहि पृथक्करण्योः । त्रिसप्तमित्योश्च चिरं विचिन्त्य चेत् षड्विधं वेत्सि सखे ! करण्याः ।

न्यासः क २ । क ८ योगे जातम् क १८ अन्तरे च क २

न्यासः क ३ । क २७ योगे जातम् क ४८ अन्तरे च क १२ न्यासः क ३ । क ७ अनयोर्घाते मूलाभावात् पृथक् स्थितिरेव योगे जातम् क ३ क ७ अन्तरे च क ३ क ७ इति करणीसङ्कलनव्यवकलने ।

गुणनोदाहरणम् । द्वित्र्यष्टसङ्ख्यागुणकः करण्या गुण्यस्त्रिसङ्ख्या च सपञ्चरूपा । वधं प्रचक्ष्वाशु विपञ्चरूपे गुणेऽथ वा त्र्यर्कमिते करण्याः । न्यासः गुणकः क २ क ३ क ८ गुण्यः क ३ रू ५

अत्र गुण्ये गुणके वा भाज्ये भाजके करणीनां करणयोर्वा यथासम्भवं लाघवार्थं योगं कृत्वा गुणनभजने कार्य्ये तथा कृते जातो गुणकः क १८ क ३ गुण्यः क २५ क ३ गुणिते जातम् रू ३ क ४५० क ७५ क ५४ ।

अयवर्गादौ विशेषसूत्रं वृत्तम् । क्षयो भवेच्च क्षयरूपवर्गश्चेत् साध्यतेऽसौ करणीत्वहेतोः । ऋणात्मिकायाश्च तथा करण्या मूलं क्षयो रूपविधानहेतोः ।

न्यासः गुणकः क २५ क ३ क १२ गुण्यः क २५ क २

अत्र गुणके करण्योर्योगे कृते गुणकः क २५ क २७ गुणिते जातम् क ६२५ क ३७५ क ७५ क ८१ एतास्वनयोः क ६२५ क ८१ मूले रू २५ रू ९ अनयोर्योगे जातम् रू १६ अनयोः क ३७५ क ७५ अन्तरे योग इति जातो योगः क २०० यथाक्रमं न्यासः रू १६ क २०० इति करणीगुणनम् । पूर्व्वगुणनफलस्य स्वगुणच्छेदस्य भागार्थं न्यासः भाज्यः क ९ क ४५० क ७५ क ५४ भाजकः क २ क ३ क ८ अत्र क २ क ८ एतयोः करण्योर्योगे कृते जातम् क १८ क ३ "भाज्याच्छेदः शुध्यति प्रच्युतः सन्" इत्यादिकरणेन लब्धो गुण्यः रू ५ क ३

न्यासः भाज्यः क २५६ क २०० भाजकः क २५ क ३ क १२ करण्योर्योगे कृते जातम् क २५ क २७

अत्रादौ त्रिभिर्गुणयित्वा धनकरण्योः ऋणकरण्योश्च योगं विधाय पश्चात्सङ्कर्षितया गुणयित्वा शोधिते लब्धं रू ५ क ३ अत्रापि पूर्व्ववल्लब्धो गुण्यः रू ५ क ३

अथ वान्यथोच्यते । धनर्णताव्यत्ययमीप्सितायाश्छेदे करण्या असकृद्विधाय । तादृक्छिदा भाज्यहरौ निहन्यादेकैव यावत्करणी हरः स्यात् । भाज्यास्तया भाज्यगताः करण्यो लब्धाः करण्यो यदि योगजाः स्युः । विश्लेषसूत्रेण पृथक् च कार्य्यास्तथा यथा प्रष्टुरभीप्सिताः स्युः । तथा च विश्लेषसूत्रं वृत्तम् । वर्गेण योगकरणी विहृता विशुध्येत् खण्डानि तत्कृतिपदस्य यथेप्सितानि । कृत्वा

धातकर्त्तृत्वस्य मम् कारिका० “स्वातन्त्र्येणाविवक्षायेति” चतुर्थ्यवस्थे पाठ०। तेन घटानां कर्त्तृत्वलक्षणम्। स च प्रकारान्तरेण त्रिविधः “त्रिधैव जायते कर्त्ता विशेषेण क्रियां प्रति। योग्यत्वप्रतिषिद्धत्वविशेषणपदान्वयैः” भट्टका०। अस्यार्थः क्रियां प्रति प्रकारत्रयेण कर्त्ता विज्ञायते तस्य विवरणम् “स्वाध्यायोऽध्येतव्यः” इत्यत्र योग्यत्वेन अध्ययनविधानयोग्यः, १। “अहरहर्दद्यात् दीक्षितो न ददाति” इत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरःपरः २। “स्वर्गकामो यजेत” इत्यत्र विशेषणपदान्वयेन स्वर्गकामः कर्त्ता जायते३,। स च प्रकारान्तरेण त्रिविधः सात्त्विकादिभेदात् यथाह गीता“मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते” “रागी कर्म्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्त्ता राजसः परिकीर्त्तितः” “अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्त्ता तामस उच्यते”। कर्त्तृपदस्य क्रियाश्रये कृत्याश्रये वा मतभेदेन रूढं न तु यौगिकमित्येतत् शब्दचि० भट्टमतदर्शनप्रस्तावे दर्शितं यथा

“अथ क्रियाजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यां घटाङ्कुरयोः कृताकृतत्वव्यवहारात् जन्यकृत्युपगतकर्त्तृपदस्य कृत्याश्रयत्वबोधकत्वाच्च कृञो यत्नार्थत्वं, क्रियामात्रार्थत्वे कृञः, क्रियाश्रयः कर्त्तृपदार्थः स्यात्। तथा च कारकमात्रेऽतिप्रसङ्गः एवञ्च कृञो यत्नार्थत्वेन आख्यातविवरणात् तस्यापि यत्नोऽर्थः। तदुच्यते। “कृताकृतविभागेन कर्त्तृरूपव्यवस्थया। यत्नएव कृतिः पूर्वा परस्मिन् सैव भावना” सैवाख्यातार्थो भावनेति चेत्। बीजेनाङ्कुरः कृतः स्वर्गादिना सुखं कृतं बीजमङ्कुरं करोतीति यत्नं विनापि व्यवहारात्” “कर्त्तृपदञ्च न यौगिकं तथा हि कृञो यत्नार्थत्वे तिङः कृत्यर्थत्वे वा धातुप्रत्ययार्थयोः कृतिकृत्योर्वा परस्परमनन्वयः कृतौ कृतिजन्यत्वस्य तद्विषयत्वस्य वाऽभावात् कृतेर्विशेष्यस्य कृतिनिराकाङ्क्षत्वादिति। एवं कृञः क्रियार्थत्वे तस्य च क्रियाश्रयवाचकत्वे तयोः परस्परमन्वय एवेति उभयदर्शने कर्त्तृपदं कर्म्मादिपदवद्रूढमेव। रूढिश्च कृत्याश्रये क्रियाश्रये वेत्यन्यदेतत् तथा च कृताकृतविभागेन च कर्त्तृरूपव्यवस्थया च न कृञो यत्नार्थत्वमिति” किन्त्वाख्यातस्य करोतेश्च न यत्नार्थत्वम् पाकाय यतते पाकं करोतीत्यादौ यत्नद्वयस्य यत्नविषयकयत्नस्य वाऽप्रतीतेः प्रकृतिप्रत्ययार्थयोश्च साध्येनान्वयानुपपत्तेः पौनरुक्त्यात् एकत्वेन विध्यनुवाददोषाच्च” इत्यादिकम् भट्टमतम्। स्वमते तु कृञः यत्नार्थत्वमिति भेदः तच्च कृधातुशब्दे दर्शयिष्यते। शब्द०प्र०कर्त्तृपदं यौगिकमिति व्यवस्थाप्य तल्लक्षणमुक्तं यथा

“तिङा विकरणान्तस्य धातोरर्थस्तु यादृशः। स्वार्थे यादृश बोध्यस्तत्कर्त्तृत्वं तदिहोच्यते। विकरणेन यद्धातुनोपस्थाप्यो यादृशार्थस्तदुत्तरतिङा स्वोपस्थाप्यतयाऽर्थोऽनुभावयितुं शक्यस्तद्धातूपस्थाप्यस्य तस्य तदेव कर्त्तृत्वं कारकमित्यर्थः। कर्म्मत्वादौ धातुनोपस्थाप्योऽर्थस्तिङानुभाव्योऽपि न विकरणान्तेनेति न तत्र प्रसङ्गः। पचति जानातीत्यादौ स्वोपस्थाप्यकृत्याश्रयत्वादौ धातूपस्थाप्यस्य पाकज्ञानादेरन्वयः पचाद्युत्तरतिङा बोध्यत इति पाकस्य यत्नश्च, ज्ञानस्याश्रयत्वमेवं नश्यतीत्यत्र नाशस्य प्रतियोगित्वं प्रतिबिम्बतइत्यत्र भ्रमात्मनः प्रतिबिम्बस्य प्रकारत्वमेव कर्त्तृत्वम्। कर्त्तृशब्दस्तु अन्वयव्यतिरेकाभ्यां कृत्याश्रये यौगिकएव न तु शक्यार्थकः प्रकारान्तराश्रयस्यैव शक्यत्वात् निरूढलक्षणया तस्यैव चाश्रयत्वस्य तथा प्रत्यायनात्। घटस्य कर्म्मत्वादौ चानुकूलत्वं षष्ठ्यर्थः फलस्य प्रायशः कृतिविषयत्वात् घटाद्युपभोगानुकूलकृतिश्च न घटाद्यनुकूला प्रमाणाभावात् अतोन घटादिभोक्तृत्वकर्त्तृत्वप्रसङ्गः। क्रियाश्रये कर्त्तृशब्दोरूढत्वेन रथादेर्गत्यादिकर्त्तृत्वमपि मुख्यमेवेति तु न युक्तम्। क्रिया हि नाम स्पन्दचेतनस्य पाककर्त्तृत्वानुपपत्तेः प्रत्युत तण्डुलादेरेव तथात्वापत्तेः नापि धात्वर्थमात्रम् अतएव,नापि स्पन्दनानुकूलव्यापारः पचनानुकूलव्यापारवतः कारकमात्रस्य पचनकर्त्तृत्वापत्तेः। अपि जुहोतीत्यादावप्यदादेरुत्तरं जुप्रत्यैव विकरणस्य प्रतिसन्धाने भोजनकर्त्तृत्वादेरवगमइति। तदप्रतिसन्धानेऽपीति मतेनाह। यगन्तभिन्नधात्वर्थवत्तया योऽनुभाव्यते। घटा स्वार्थः स धात्वर्थः कर्त्तृता वा निगद्यते। यगन्तभिन्नधातूपस्थाप्यवादृशार्थप्रकारयदर्थधर्म्मिकान्वयबोधं प्रति घटः सामर्थ्यं स एवार्थो धातूपस्थाप्यतदर्थस्य कर्त्तृत्वम् पच्यत इत्यादौ धातोरर्थवत्तया स्वार्थकर्म्मत्वं घटानुभाव्यमपि न यगन्तभिन्नस्य, पच्यते तण्डुल इत्यादौ तु ताडयस्य धातोरर्थवत्तया तिङैव स्वार्थः कर्म्मत्वमनुभाव्यते न तद्विशेषेण घटेति तद्व्युदासः। अपादानत्वादिभेदेन षड्विधत्वमिति कोशाद्युक्तत्वभेदेन कारकस्य द्वैविध्यमप्यस्तीति तदनुसारी न्यूनत्वमत आह। धात्वर्थस्य

धर्मितया तिङाद्यैरनुभाव्यते। यत्तदुक्तं धर्मतया त्वनुक्तं कारकं भवेत्। धात्वर्थस्य विशेष्यतया तिङाद्यनुभाव्यत्वमेव कारकस्योक्तत्वं तद्विशेषणतया तदनुभाव्यत्वमेव चानुक्तत्वं नतु धातुवाच्याङ्गप्रत्ययस्याभिधेयत्वमात्रमुक्तं तथात्वे पचति इत्यादावपि कर्म्मत्वादेरुक्तत्वापत्तेः। पचति पच्यत इत्यादौ तिङा, पाचकः पच्यमान इत्यादौ च कृता, कर्तृत्वं कर्म्मत्वञ्च धात्वर्थविशेष्यत्वेनानुभाव्यते तथा पचनं काष्ठं, दानीयो द्विजः, भीमो गजः, शयनं गृहमित्यादौ यथाक्रमं करणत्वादि व्युत्पत्तिवैचित्र्येण पदार्थैकदेशेऽपि कर्तृत्वादौ धात्वर्थस्य पाकादेरन्वयात्। सेवितुं साम्प्रतं निर्गुणः पक्षपातमपि” “विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्” इत्यादौ निपातेन क्वचित् कर्म्मत्वकारकस्योक्तत्वम्। धातुभेदेन कर्म्मत्वकारकस्योक्ततायां नियममाह। दुहादिभ्यः प्रत्ययेन मुख्यकर्म्मत्वमुच्यते। णिजन्तेभ्यः कर्तृताख्या तदसत्त्वेऽन्यकर्म्मता। दुहाद्युत्तरप्रत्ययेन मुख्यं साक्षाद्धात्वर्थतावच्छेदकं यत्कर्मत्वं तदेवोच्यते धात्वर्थविशेष्यत्वेनानुभाव्यते तेन गोः पयो दुह्यते दुग्धा वेत्यत्र पयःकर्मकमोचनानुकूलव्यापारजन्यमोचनवती गौरित्येवं बोधः। तत्र मोचनार्थकस्य व्यापारस्य धातुवाच्यतया मोचनस्यैव साक्षाद्धात्वर्थतावच्छेदकफलत्वात्। वह्निप्रभृतेर्गत्यर्थकस्य व्यापारः। हवेव गत्यर्थकस्य विकर्षणं वाच्यमतः साक्षात् तद्वाच्यतावच्छेदकं गतिमत्त्वमेव फलं न तु तद्घटकसंयोगादि। तथाच 'भारो भवनं नीयते' इत्यादौ शाखा ग्रामं कृष्यते' इत्यादौ च यथाक्रमं भवनकर्मकगत्यनुकूलव्यापारजन्यगतिमान् भारः, ग्रामकर्मकगत्यर्थकस्य विकर्षणकर्म्मताश्रयः शाखेत्याकारकबोधयोरुत्पत्त्यैव सम्पत्तौ दुहादेर्गौणकर्मत्वं, नीवहादेः प्रधानत्वमित्याद्युक्तिभेदेन विविदयं शाब्दिकानामनादेयम्। णिजन्तोत्तरं कर्म्मतार्थप्रत्ययस्थले तु मूलधातोः कर्तृतायाः कर्मतातिदेशसम्भवे तादृशमेव कर्मत्वं धात्वर्थस्य विशेष्यतया तिङाद्यैर्बोध्यते यथा चैत्रो ग्रामं गम्यते गमितो वेत्यादौ ग्रामकर्मकव्यापारजन्यगमनस्य कर्त्ता चैत्र इत्यादि। यत्र तु न तदतिदेशस्तत्र मूलधातोः कर्मत्वमेव तदर्थविशेष्यतया तैरुच्यते यथा 'ओदनः पाच्यते स्वाद्यते वा भृत्येन भर्त्रा' इत्यादौ तत्र भर्तृकर्तृकव्यापारजन्यस्य भृत्यकर्तृकपाकादेः कर्मतयौदनादिरेव बोध्यते 'मैत्रेण पयः स्वाद्यमानस्त्वं व्रजतीत्यादौ' कर्मणि शानजादिप्रत्ययः प्राक् परिचिन्तितः”।

न्यायादिमते ज्ञातिमानेव कर्त्तृशब्दवाच्यः इत्यतः कर्तृत्वमात्मधर्म्मः। सांख्यमते बुद्धेरेवायं कर्तृत्वाभिनिवेशस्तदुपरागादकर्त्तुः पुरुषस्यापि तदभिमानः। तदेतत् सां० प्र० सू० भाष्ययोर्दर्शितम् यथा
“उपरागात् कर्त्तृत्वं चित्सान्निध्याच्चित्सान्निध्यात्” सू०। “अत्र यथायोग्यमन्वयः। पुरुषस्य यत् कर्त्तृत्वं तद्बुद्ध्युपरागात्। बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात्। एतदुभयमप्यात्तत्वमित्यर्थः। यथाग्न्ययसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिको यथा वा जलसूर्ययोः संयोगात् परस्परधर्मारोपस्तथैव बुद्धिपुरुषयोरिति भावः” भा०।

पुरुषस्य यथाऽकर्त्तृता तथा सां० कौ० व्यवस्थापितं यथा “तस्माच्च विपर्यासात्सिद्धं साक्षित्वमस्य पुरुषस्य। कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च” का०। “तस्माच्चेति चः पुरुषस्य बहुत्वेन सह धर्मान्तराणि समुच्चिनोति विपर्यासात् त्रैगुण्यादिवक्ष्यमाणादित्युक्तौ त्रैगुण्यविपर्ययादित्यनन्तरोक्तं सम्बध्येत अतस्तन्निरासाय तस्मादित्युक्तम् अनन्तरोक्तं हि सन्निधानादिदमो विषयो विप्रकृष्टञ्च तद इति विप्रकृष्टं त्रिगुणमविवेक्यादि सम्बध्यते। तस्मात् त्रिगुणादेः यो विपर्यासः स पुरुषस्यात्रिगुणत्वं विवेकित्वमविषयत्वमसाधारणत्वं चेतनत्वमप्रसवधर्मित्वञ्च। तत्र चेतनत्वेन अविषयत्वेन च साक्षित्वद्रष्टृत्वे दर्शिते चेतनो हि द्रष्टा भवति नाचेतनः साक्षी च दर्शितविषयो भवति यस्मै प्रदर्श्यते विषयः स साक्षी यथा हि लोके अर्थिप्रत्यर्थिनौ विवादविषयं साक्षिणे दर्शयतः एवं प्रकृतिरपि स्वचरितं विषयं पुरुषाय दर्शयतीति पुरुषः साक्षी। न चाचेतनो विषयो वा शक्यो विषयं दर्शयितुमिति चैतन्यादविषयत्वाच्च भवति साक्षी अतएव द्रष्टापि भवति अत्रैगुण्याच्चास्य कैवल्यम् आत्यन्तिको दुःखत्रयाभावः कैवल्यं तच्च तस्य स्वाभाविकादेवात्रैगुण्यात्सुखदुःखमोहरहितत्वात्सिद्धम्। अतएवात्रैगुण्यान्माध्यस्थ्यं सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो भवति तदुभयरहितस्तु मध्यस्थ इत्युदासीन इति चाख्यायते। विवेकित्वादप्रसवधर्मित्वाच्चाकर्त्तेति सिद्धम्। स्यादेतत् प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्मते नावकल्पते चेतनस्याकर्तृत्वात् कर्तुश्चाचैतन्यादित्यत आह” कौ० “तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः” का०।

"यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भ्रान्तिरियमित्यर्थः। लिङ्गं महदादिसूक्ष्मपर्य्यन्तं वक्ष्यति भ्रान्तिबीजं तत्संयोगस्तन्निदानम् अतिरोहितार्थमन्यत्" कौ०। तदेतन्मतन्तु शाब्द मुक्तावल्यां निराकृतं यथा "एतेन प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवन्निर्लेपः किन्तु चेतनः कार्य्यकारणयोरभेदात् कार्य्यनाशे कार्य्यरूपतया नाशः स्यादित्यकारणत्वं तस्य बुद्धिगतचैतन्याभिमानार्थानुपपत्त्या तदुपकल्पनम्। बुद्धिश्च प्रकृतेः प्रथमः परिणामः। सैव महत्तत्त्वमन्तःकरणमप्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रियप्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः। पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्त्तव्यमिति मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया चेतनप्रतिबिम्बादतात्त्विको दर्पणस्येव मुखोपरागः। इदमिति विषयोपराग इन्द्रियप्रणालिकया परिणतिभेदस्तात्त्विको निश्वासाभिहतदर्पणस्येव मलिनिमा। कर्त्तव्यमिति व्यापारावेशः। तेनांशत्रयवती बुद्धिस्तत्परिणामेन ज्ञानेन पुरुषस्यातात्त्विकः सम्बन्धो दर्पणमलिनिम्नेव मुखस्योपलब्धिरुच्यते। ज्ञानादिवत् सुखदुःखेच्छाद्वेषप्रयत्नधर्म्माधर्म्मा अपि बुद्धेरेव कृतिसामानाधिकरण्येन प्रतीतेः। न च बुद्धिश्चेतना परिणामित्वादिति सांख्यमतमपास्तम् कृत्यदृष्टभोगानामिव चैतन्यस्यापि सामानाधिकरण्यप्रतीतेस्तद्भिन्ने मानाभावाच्चेतनोऽहं करोमीति प्रतीतेः। बुद्धेः परिणामित्वाच्चैतन्यांशे भ्रम इति चेत् कृत्यंशे किं नेष्यते। अन्यथा बुद्धेर्नित्यत्वे तत्पूर्व्वमसंसारापत्तिः। अचेतनायाः प्रकृतेः कार्य्यत्वात् बुद्धेरचैतन्यं कार्य्यकारणयोस्तादात्म्यादिति चेन्न असिद्धेः कर्त्तुर्जन्यत्वे मानाभावात् वीतरागजन्मादर्शनादनादित्वम्। अनादेर्नाशासम्भवान्नित्यत्वम्" मुक्ता०। वेदान्तिमते आविद्यकजीवस्यैवौपाधिकं कर्तृत्वं शा०सू० भा० व्यवस्थापितम् यथा।

"कर्त्ता शास्त्रार्थवत्त्वात्"। तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्म्मः प्रपञ्च्यते। कर्त्ता चायं जीवः स्यात् कस्मात् शास्त्रार्थवत्त्वात् एवञ्च यजेत जुहुयात् दद्यादित्येवंविधं विधिशास्त्रमर्थवद्भवति अन्यथा तदनर्थकं स्यात्। तद्धि कर्त्तुः सतः कर्त्तव्यविशेषमुपदिशति न चासति कर्तृत्वे तदुपपद्यते। तथेदमपि शास्त्रमर्थवद्भवति "एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुष" इति भा०। 'विहारोपदेशात्' सू०। "इतश्च जीवस्य कर्तृत्वं यज्जीवप्रक्रियायां सन्ध्ये स्थाने विहारमुपदिशति "स ईयतेऽमृतो यत्र काममिति" "स्वे शरीरे यथाकामं परिवर्त्तते" इति च भा०। "उपादानात्" सू०। "इतश्चास्य कर्तृत्वं यज्जीवप्रक्रियायामेव करणानामुपादानं सङ्कीर्त्तयति। "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। "प्राणान् गृहीत्वेति च" भा०। "व्यपदेशाच्च क्रियायां न चेन्निर्द्देशविपर्य्ययः" सू०। "इतश्च जीवस्य कर्तृत्वं यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिश्यते 'विज्ञानं यज्ञं तनुते कर्म्माणि तनुतेऽपि चेति"। ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यतेति नेत्युच्यते जीवस्यैवैष निर्द्देशो न बुद्धेः न चेज्जीवस्य स्यात् निर्द्देशविपर्य्ययः स्यात् विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्द्देशो दृश्यते "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति"। इह तु "विज्ञानं यज्ञं तनुत" इति कर्तृसमानाधिकरणनिर्द्देशात् बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः। अत्राह यदि बुद्धिव्यतिरिक्तो जीवः कर्त्ता स्यात् स स्वतन्त्रः सन् प्रियं हितं चैवात्मनो नियमेन सम्पादयेत् न विपरीतं, विपरीतमपि तु सम्पादयन्नुपलभ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यते इति अत उत्तरं पठति" भा०। "उपलब्धिवदनियमः" सू०। यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टञ्च उपलभते एवमनियमेनैवेष्टमनिष्टञ्च सम्पादयिष्यति। उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेन्न विषयविकल्पनमात्रप्रयोजनत्वादुपलब्धिहेतूनाम् उपलब्धौ त्वनन्यापेक्षत्वमात्मनः चैतन्ययोगात्। अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देशकालनिमित्तविशेषापेक्षत्वात्। न च सहायापेक्षस्य कर्त्तुः कर्तृत्वं निवर्त्तते। भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम्। सहकारिवैचित्र्याच्च इष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते" भा०। "शक्तिविपर्य्ययात्" सू०। "इतश्च विज्ञानव्यतिरिक्तो जीवः कर्त्ता भवितुमर्हति। यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्य्ययः स्यात् करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत। सत्याञ्च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् अहङ्कारपूर्व्विकाया एव प्रवृत्तेः सर्व्वत्र दर्शनात् अहं गच्छाम्यहं भुञ्जेऽह

प्नोतीति च तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारित्वात् सर्वार्थकारि करणमन्यत् कल्पयितव्यं शक्तोऽपि हि सन् कर्त्ता करणमुपादाय क्रियासु प्रवर्त्तमानो दृश्यत इति। ततश्च संज्ञामात्रे विसंवादः स्यात् न च वस्तुभेदः कश्चित् करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात्" भा० "समाध्यभावाच्च" सू०। "योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "ओमित्येवं ध्यायथ आत्मानम्" इत्येवंलक्षणः सोऽप्यसत्यात्मनः कर्तृत्वेनोपपद्येत, तस्मादप्यस्य कर्तृत्वसिद्धिः" भा०। "यथा च तक्षोभयथा" सू० "एवं तावत् शास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितं तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्र तैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम् अपवादहेत्वभावादित्येवं प्राप्ते ब्रूमः। न स्वाभाविकं कर्तृत्वमात्मनः सम्भवति अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः सम्भवति अग्नेरिवौष्ण्यात्। न च कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः कर्तृत्वस्य दुःखरूपत्वात्। ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्य्यपरिहारात् पुरुषार्थः सेत्स्यति तत्परिहारश्च निमित्तपरिहारात् यथाग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्य्याभावस्तद्वत् न, निमित्तानामपि शक्तिलक्षणेन सम्बन्धेन सम्बद्धानामत्यन्तपरिहारासम्भवात्। ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति न साधनायत्तस्यानित्यत्वात्। अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता तादृगात्मप्रतिपादनञ्च न स्वाभाविके कर्तृत्वेऽवकल्पते। तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः "ध्यायतीव लेलायतीव" इति। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति चोपाधिसंयुक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। न हि विवेकिनां परस्मादन्यो जीवो नाम कर्त्ता भोक्ता वा विद्यते "नान्योऽतोऽस्ति द्रष्टे"त्यादि" श्रवणात्। पर एव तर्हि संसारी कर्त्ता भोक्ता च प्रसज्येत परस्मादन्यश्चेन्न तस्मात् बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात् न अविद्याप्रत्युपस्थापितत्वात् कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रं "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति" अविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति "यत्र त्वस्य सर्वमात्मैवाभूत्तत् केन कं पश्येदिति"। तथा स्वप्नजागरितयोरात्मन उपाधिसम्पर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्ते प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तर"मित्यारभ्य "एषास्य परमा गतिरेषास्य परमा संपत् एषोऽस्य परमो लोक एषोऽस्य परमानन्दः" इत्युपसंहारात्। तदेतदाहाचार्य्यः "यथा च तक्षोभयथेति"। तत्वर्थे चायञ्चः पठितः। नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वम् अग्नेरिवौष्ण्यमिति। यथा च लोके तक्षा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृत्तो निर्व्यापारः सुखी भवति एवमविद्याप्रत्युपस्थापितद्वैतसंयुक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वमात्मानं परं प्रविश्य मुक्तकार्य्यकरणसंघातोऽकर्त्ता सुखी भवति संप्रसादावस्थायां, तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृत्तः सुखी भवति। तक्षदृष्टान्तश्चैतावतांशेन द्रष्टव्यः तक्षा हि विशिष्टेषु तक्षणादिषु व्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्त्ता भवति स्वशरीरेण त्वकर्त्ता, एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्त्ता भवति स्वात्मना त्वकर्त्तैवेति न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा। यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति तत्र विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्त्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति। न च स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम। तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्त्तिष्यते। कर्त्ता विज्ञानात्मा पुरुष इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते तयोरप्यनुवादरूपत्वात्। ननु सन्ध्ये स्थाने सुषुप्तेषु करणेषु "स्वे शरीरे यथाकामं परिवर्त्तते" इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृमाय इति, तथोपादानेऽपि "तदेषां प्राणानां विज्ञानेन विज्ञानमादायेति" करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यैवात्मनः कर्तृभावं गमयत इति। अत्रोच्यते न तावत् सन्ध्ये स्थाने

ऽस्यात्मनः करणविरमणमस्ति "सधीः स्वप्नोभूत्वेमं लोकमतिक्रामतीति" तत्रापि धीसम्बन्धश्रवणात्। तथा च श्रुतिः "इन्द्रियाणामुपरमे मनोऽनुपरतं यदि। सेवते विषयानेव तद्विद्यात् स्वप्नदर्शनमिति"। कामाद्यश्च मनसोऽन्तर्य इति श्रुतिः तास्य स्वप्ने दृश्यन्ते तस्मात् समना एव स्वप्ने विहरति। विहारोऽपि तत्तत्योवासनामय एव न पारमार्थिकोऽस्ति। तथा च श्रुतिरिवकारानुबन्धमेव स्वप्नव्यापारं वर्णयति "उतेव स्त्रीभिः सह मोदमानो यचद्गुतेवापि भयानि पश्यन्निति"। लौकिका अपि तथैव स्वस्वप्नं कथयन्ति आरुक्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति। तथोपादाने यद्यपि करणे कर्मकारकविभक्तिनिर्देशस्तथापि तत्र युक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यं केवलेकर्तृत्वासम्भवस्य दर्शितत्वात्। भवति च लोकेऽनेकप्रकारा विवक्षा 'योधायुध्यन्ते' 'योधै राजायुध्यते' इति च। अपि चास्मिन् पादाने करणव्यापारोपरममात्रं विवक्ष्यते न स्वातन्त्र्यं कस्यचित्, अबुद्धिपूर्व्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितः "विज्ञानं यज्ञं तनुते" इति स बुद्धेरेव कर्तृत्वं प्रापयति विज्ञानशब्दस्य तत्र प्रसिद्धत्वात् मनोऽनन्तरपाठाच्च "तस्य श्रद्धैव शिरः" इति विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसङ्कीर्त्तनात् श्रद्धादीनाञ्च बुद्धिधर्मत्वप्रसिद्धेः "विज्ञानं देवाः सर्व्वे ब्रह्मज्येष्ठमुपासते" इति च वाक्यशेषात् ज्येष्ठत्वस्य बुद्धौ प्रसिद्धत्वात् "स एव वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञ" इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्। न च बुद्धेः शक्तिविपर्य्ययः करणानां कर्तृत्वाभ्युपगमे भवति सर्व्वकारकाणामेव स्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षं त्वेषां करणत्वं सा चात्मनः। न च तस्यामप्यस्य कर्तृत्वमस्ति नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्व्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति अहङ्कारस्याप्युपलभ्यत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः। यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात् कर्तृत्वमप्यात्मन उपाधिनिबन्धनमेवेस्थितम्" भा०। "अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते" इति गीतया कर्तृत्वस्याहङ्काराधीनतयौपाधिकत्वं सूचितमिति द्रष्टव्यम्"।

तथा चान्तःकरणोपहितचैतन्यमेव जीवः स एव वेदान्तिमते कर्त्तेति तत्त्वम्। तस्य च ईश्वराधीनत्वेन कर्तृत्वं तदपि "परात्तु तच्छ्रुतेः" इत्यादिशा० सूत्रभाष्ययोर्व्यवस्थापितं तच्च ईश्वरशब्दे दर्शितमिति। स्त्रियां ङीप् कर्त्री। "कर्त्तरि कृत्" कर्तृकरणयोस्तृतीया" "अकर्त्तरि च कारके" "कर्त्तुरीप्सिततमं कर्म" "कर्त्तृस्थभावकाद्यारे क्यङ्" शेषात् कर्त्तरि परस्मैपदम्" पा०। "कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्" हरिः ३तत्प्रयोजके "तत्प्रयोजकोहेतुश्च" पा० "अकर्त्तर्य्यृणे" पा०। कर्त्तुर्भावः त्व कर्त्तृत्व न० तल् कर्त्तृता स्त्री कृत्याश्रयत्वे क्रियाश्रयत्वे च। तत्र नैयायिकमते आख्यातस्य कृतौ शक्तिः वैयाकरणमते कर्त्तरि शक्तिः "कर्त्तरि कृत्" "लः कर्म्मणि भावे चाकर्मकेभ्यः" पा० सूत्राभ्यां तथैव प्रतिपादनात् "कर्त्तरि कृत्" इत्यतः कर्त्तृपदस्यैव परसूत्रेऽनुवृत्तेः लकारस्यापि तदर्थकतेव्याकरणे स्थितम्। अधिकमाख्यातशब्दे उक्तम्। "न कर्त्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः" गीता। ३परमेश्वरे पु० तस्य सर्वकर्तृत्वात् "एतेषां पुरुषाणां स कर्त्ता यस्य वैतत् कर्म स वै वेदितव्यः" इति श्रुतेस्तस्य तथात्वम् यथा च तस्य सर्वकर्त्तृत्वं तथा ईश्वरशब्दे दर्शितम्। "करणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" विष्णुस०। कृत—तृच्। ४छेदके त्रि० स्त्रियां ङीप् "क्रोधहा क्रोधकृत्कर्त्ता" विष्णुस०। क्रोधकृतां दैत्यानां कर्त्ता भेदकः इत्येकं नामेति" भा०(कृत) ५खड्गखड्गे न०। तस्य कर्त्तनहेतुत्वात् तथात्वम् "चतुर्भुजां कृपाणीं तु दक्षेण कर्तृखर्परौ" ताराध्यानम्। ईदृशस्त्रिकायां स्त्री ङीप्। "कर्त्रीञ्च खर्परञ्चैव क्रमाद्वामेन बिभ्रतीम्" ताराध्यानम्। उभयमपि उग्रताराशब्दे दर्शितम्। (कातारी) ७कर्त्तर्य्याम् शब्दरत्ना०। स्वार्थे क। कर्तृकापि खड्गखड्गे स्त्री "हास्ययुक्तां त्रिनेत्राञ्च कपालकर्तृकाकराम्" तन्त्रसा० श्यामाध्यानम्। किरति विक्षिपति कायम् कॄ—विक्षेपे तृच्। ज्वरादिहेतुके ददाह्यादौ। ततोऽस्त्यर्थे मतुप् कर्तृमत् कर्तृयुक्ते त्रि० स्त्रियां ङीप्। "सुखनद्याः मतुप्" पा० अस्य उदात्तत्वम्। कर्तृशब्दे उपपदे दिवाविभेत्यादिना कृञः टः। कर्तृकर कर्तृकारके तत्प्रयोजके। स्त्रियां ङीप्। इष्ठ ईयसि च तृणोलोपः करिष्ठः करीयान्। तृचस्तु न लुक्। डिहलावे कर्त्तिष्ठः कर्त्तीयानिति भेदः।

कर्त्र शैथिल्यकरणे अद०चुरा०उभय०सक०शैथिल्ये अक०सेट् कर्त्रयति ते कर्त्रापयतीत्येके अचकर्त्रत त। कर्त्रयाम्—

बभूव आञ्चकार चक्रे । कर्त्तर्यते अकर्त्ति—अकर्त्तिषाताम्-अकर्त्तयिषाताम् । प्रनिकर्त्तयति । ण कर्त्तितः ।

**कर्त्रभिप्राय** पु॰ कर्त्तारमभिप्रैति संबध्नाति अभि+प्र+इण—अण् उप॰स॰ । १कर्त्तृसम्बन्धिनि । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा॰ । अत्र क्रियाफलस्वरूपव्याख्याभिः शब्दार्थरत्ने निरूपितं यथा । "स्वरितञिद्धातूत्तरतङः कर्तृगामिन्येव सति क्रियाफले कर्तृवाचकत्वं नान्यथा तत्र फलस्य न धातूपस्थाप्यं जानात्यादीनां ज्ञानरूपफलस्य समवायेन कर्तृनिष्ठतया सर्व्वदैव जानीते इत्येव प्रयोगापत्तेः जानातीत्यादेरप्रयोगापत्तेश्च नेष्यते तु तथा शास्त्रकारैः । नापि क्रियाजन्यचेतनदक्षिणादिरूपलाभादि गौणं फलमिह विवक्षितं तथा सति सूदादेर्लाभरूपफलवत्त्वेन सूदः पचते ऋत्विजो यजन्ते इत्यादिप्रयोगापत्तेः । किन्तु फलतीतिव्युत्पत्त्या प्रयोजनापरनामकक्रियाजन्यादृष्टस्वर्गादिरूपमेव मुख्यं फलं ग्राह्यं यथोक्तं हरिणा "यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः । तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति"। प्रसिद्ध्यर्थं निष्पत्त्यर्थं पचादयः पाकादयः तासां पचादीनां प्रधानं फलं तदित्यर्थः फलस्य प्राधान्यञ्चेतरापेक्षया बोध्यं तेन इतरेच्छानधीनेच्छाविषयत्वस्य तस्य सुखादिष्वेव सत्त्वेऽपि क्वचित् साक्षात्सुखादिरूपप्रयोजनालाभे तत्साधनरूपेतरफलस्यापि ग्रहणमिति द्रष्टव्यम् तेन "अपाद्वदः" पा॰ इत्यादिसूत्रविहिततङः सुखादिरूपमुख्यप्रयोजनाभावेऽपि कर्तृवाचकत्वम्" । कर्त्तुरभिप्रायो यत्र । २कर्त्तुरभिप्रायविषये त्रि॰ उक्तपाणिनिसूत्रस्य "आत्मनेपदमपि कर्त्रभिप्रेतक्रियाफलमात्रजनकत्वेनेति शब्दचि॰ व्याख्यानात्तदर्थता अत एव पा॰ सूत्रस्योभयार्थता । तदेतच्छब्द॰ प्र॰ विवृतं यथा "अत्रोभयपदिधातूनां यत्र क्रियाफलं कर्तृनिष्ठं तत्रात्मनेपदं यत्र च कर्तृभिन्ननिष्ठं तत्र परस्मैपदं साधु "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति सूत्रेण कर्त्तारमभिप्रैति सम्बध्नातीति व्युत्पत्त्या कर्तृसम्बद्धे क्रियाफल एवात्मनेपदस्य विधानात् । अतएव "स्वरिञ्जिण्णन्तधातूनां कर्तृनिष्ठे क्रियाफले । आत्मनेपदमुद्दिष्टं तदन्निष्ठे पदान्तरम्" इत्यपि शाब्दिकाः पठन्ति । तदनुसृत्यैव टीकादिस्थले स्वगते फले ददे इत्येवं, परगते तु ददातीत्येव वाक्यं प्रयुञ्जते वृद्धाः । "स्वर्गकामो यजेत" इत्यादौ च सामान्यतः स्वतमपि फलं कर्तृनिष्ठमेव "शास्त्रदेशितं फलमनुष्ठातरीति" मीमांसयोत्सर्गतस्तथा कल्पनादिति प्राहुः । चिन्तामणिकृतस्तु यत्र क्रियाफले कर्त्तुरभिप्राय इच्छा तत्रैवात्मनेपदमिति सूत्रार्थस्तेन याजकादेर्दक्षिणादिलाभेच्छयैव यागादिकरणे यजन्ति याजकाः पठन्ति पाठकाः इति परस्मैपदम् । परगतस्यापि यागादिफलस्येच्छया तत्करणे तु यजन्ते याजका इत्यादिकः साधुरेव प्रयोगोऽतएव "पितृस्वर्गकामः पुत्रकारिण्या यजेत" इत्यादावप्यात्मनेपदम् "धनकामो गणपतिं भक्तिकामोऽर्च्चयेद्धरिम्" इत्यादौ च परस्मैपदं सङ्गच्छते" इत्याहुः । [अचकर्दीत् चकर्द प्रनिकर्दति ।

**कर्द** कुत्सितरवे उदरशब्दे च भ्वा॰पर॰अक॰सेट् । कर्दति

**कर्द** पु॰ कर्द—अच् । कर्दमे । शब्दर॰ ।

**कर्दट** पु॰ कर्दं कर्दमं कारणत्वेनाटति प्राप्नोति अट—अच् ईत॰ शक॰ । १करहाटे पद्मकन्दे २कर्दमगन्तरि त्रि॰ । मेदि॰ । कर्द—अटन् । ३पङ्के पु॰मेदि॰ ।

**कर्दन** न॰ कर्द—भावे ल्युट् । उदरशब्दे हेमच॰ ।

**कर्दम** पु॰ कर्द—अम । (कादा) १पङ्के अमरः । "सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्" रघुः । करणे अम । २पापे उणादिकोष: । तस्य कुत्सितशब्दहेतुत्वात्तथात्वम् । ३मांसे न॰ शब्दचि॰ । तत्सेवने हि उदरशब्दो जायते इति तस्य तथात्वम् । कर्दमच्छाया कारणत्वेनास्त्यस्य अर्श॰ अच् । ब्रह्मणश्छायाजाते ४प्रजापतिभेदे । "छायायाः कर्दमो जज्ञे देवहूत्याः पतिः प्रभुः" भाग॰ ३,१२,१४, "प्रजाः सृजेति भगवान् कर्दमो ब्रह्मणोदितः । सरस्वत्यां तपस्तेपे सहस्राणां समा दश । ततः समाधियोगेन क्रियायोगेन कर्दमः । संप्रपेदे हरिं भक्त्या प्रपन्नवरदाशुषम्" भाग॰ ३,२१, अध्यायादौ । ततः कपिलस्य प्रादुर्भावो वर्णितः । तन्नामनिरुक्तिः" ब्रह्मवै॰ पु॰ ब्र॰ ख॰ दर्शिता यथा । "वेदेषु कर्दमः शब्दश्छायायां वर्त्तते स्फुटम् । बभूव कर्दमाद्बालः कर्दमस्तेन कीर्त्तितः" । तेन ५छायायामपि । ततः प्रेक्षादि॰ चतुरर्थ्यां क । कर्दमक पङ्कसन्निकृष्टदेशादौ त्रि॰ कर्दमो जातोऽस्य तारका॰ इतच् । कर्दमित जातकर्दमे त्रि॰ । अर्श॰ मत्वर्थे॰ अच् । कर्दम ईकर्दमयुक्ते त्रि॰ । काश्या॰ चतुरर्थ्यां ठञ् ञिठौ कार्दमिक कर्दमसन्निकृष्टदेशादौ त्रि॰ ठञि स्त्रियां ङीप् । मत्वर्थे इनि कर्दमिन् पु॰ तद्युक्ते त्रि॰ सुश्रुतोक्ते पु॰ वैद्य॰ तस्य कर्दमसमीपजातत्वात्तथात्वम् । दृषी॰ कर्दमीत्यपि तत्रार्थे ।

**कर्दमक** पु॰ कर्दमे कायति प्रकाशते कै-क । शालिभेदे,

स्यात् सामग्र्योर्मिथोविरोधेन विभिन्नकर्म्मावच्छिन्नयोः प्रत्ययानां युगपत्कर्तृताकर्म्मत्वयोरनुभावकत्वस्याप्यसम्भवात् । अतएव पचेत्यमो नैवतराञ्चावित्यादिकोन प्रयोगः “आत्मने भोव्यधातूनां समानार्थकलयोः क्रियः । अन्वियमध्यगोलधा मृजः कर्तृकर्मत्वबोधने । यगिणौ न दुहेर्नी यमजन्तस्य च तस्य च । इष् वा स्यादुताधातूनां नित्यं तत्रात्मनेपद”मिति हरिस्मृतेः । स्वयं विकुरुते युगेत्यादौ, स्वयं चिकीर्षते कट इत्यादौ, स्वयं कटः कारयते गोहन्तपुच्छयते चोरयते इत्यादौ, स्वयमेव क्रियते कटीत्यादौ, स्वयं श्रथ्नीते ग्रथ्नीते वा मालिकेत्यादौ, स्वयं ब्रूते कथेत्यादौ, स्वयं दुग्धे गौरित्यादौ, धात्वर्थकर्तृकर्म्मत्वयोर्युगपद्भासे कर्म्मत्वान्वयानुकूलस्य यकोऽनपेक्षा, तथा स्वयं व्यलुनात् लुना, स्वयमचिकीर्षत कट इत्यादौ, इणोऽपि एवं स्वयमजानि अजनिष्ट वा कोदार इत्यादौ, स्वरान्तस्य धातोः स्वयमदुग्ध अदोहि वा गौरित्यादौ, दुहेर्यगस्य तदुभयभावार्थमिणोऽनावश्यकत्वमतरतत्र सुलभं तद्वृति । “विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः” (कुमा०) इत्यादौ तु यकोगतिश्चिन्त्या । ननु पाकः पच्यते भुज्यते इत्यादितः कुतः पाकादौ पाकादिकर्म्मत्वावगमः सुवर्थस्यैव कर्म्मत्वस्य धात्वर्थे धर्म्मिणि पाकाद्यन्वयादत आह । स्वकर्मकधात्वर्थकर्तृतापरकर्मता । यत्रान्येषस्य कर्म्मत्वे प्रथमैवानुशिष्यते । स्वकर्म्मताकवैशिष्ट्यकधात्वर्थकर्तृकर्तृकस्यापरस्य धातुनिपातयोरन्यतरार्थस्य कर्म्मत्वं यत्र धर्म्मिण्यन्वेति तदीयत्वेनानुभाव्ये कर्म्मत्वे प्रथमैवानुशिष्यते न तु द्वितीयादिरपेक्ष्यते तेन पाकः स्वकर्म्मताकपाककर्तृकर्तृताकभोजनकर्म्मतावानित्याद्यन्वयधीस्तत्र स्यात् । अतएव “प्रधानप्रत्ययाभिधाने गुणकर्म्मरानभिहितवत् प्रकाशते” इति पठन्ति । यक्तिः कारकमिति यान्त्रिकाः । कर्म्मतामात्रन्तु न्यायः, तेन इत्तेन पचता भुज्यते पाक इत्यादौ नाभिहिताधिकारीयप्रथमा यक्तिः” । अत्राभिहिताधिकारीयप्रथमायक्तिरिति तु अनभिहिताधिकारीया न ततोयायक्तिरत्येतत् परम् अभिहिते प्रथमा इत्यत्राधिकाराभावात् अनभिहिते इत्यस्याधिकारादिति चिन्त्यम् । ६त० । २कर्म्मकारके त्रि० । स्त्रियां ङीप् । ३क्विप् ६त० । कर्म्मकृन्मात्र । कर्म्मकरपक्षे उदा० ।

**कर्म्मकाण्ड** न० कर्म्मणां कर्त्तव्यताप्रतिपादकं काण्डम् । कर्म्मणां कर्त्तव्यताप्रतिपादके वेदभागे कर्म्मकाण्डस्य स्वाप्रयोजकस्य इह० उ०भाष्ये दर्शितं यथा । “तत्रास्य कर्म्मकाण्डेन सम्बन्धोऽभिधीयते । सर्वोऽयं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपायप्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात् । दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा । न चासति जन्मान्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात् स्वभाववादिदर्शनात् । तस्माज्जन्मान्तरसम्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहारोपायविशेषे च शास्त्रं प्रवर्त्तते । “येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके” इत्युपक्रम्य “अस्तीत्येवोपलब्धव्यः” इत्येवमादिनिर्णयदर्शनात् । “यथा च मरणं प्राप्य” इत्युपक्रम्य “योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म्म यथाश्रुतम्” इति च, स्वयं ज्योतिरित्युपक्रम्य “तं विद्याकर्म्मणी समन्वारभेते पुण्यो वै पुण्येन कर्म्मणा भवति” । पापः पापेनेत्युपक्रम्य “विज्ञानमयः” इति च व्यतिरिक्तात्मास्तित्वम् । तत्प्रत्यक्षविषयमेवेति चेन्न वादिविप्रतिपत्तिदर्शनात् । न हि देहान्तरसम्बन्धिन आत्मनः प्रत्यक्षेणास्तित्वविज्ञाने लोकायतिका बौद्धाश्च नः प्रतिकूलाः स्युः नास्त्यात्मेति वदन्तः । न हि घटादौ प्रत्यक्षविषये कश्चिद्विप्रतिपद्यते नास्ति घट इति । स्थाण्वादौ पुरुषादिदर्शनान्नेति चेत् न निरूपितेऽभावात् । न हि प्रत्यक्षेण निरूपिते स्थाण्वादौ विप्रतिपत्तिर्भवति । वैनाशिकास्त्वहमिति प्रत्यये जायमानेऽपि देहान्तरव्यतिरिक्तस्य नास्तित्वमेव प्रतिजानते । तस्मात् प्रत्यक्षविषयत्वव्यावृत्तः प्रत्यक्षात्मास्तित्वसिद्धिः । तथानुमानादपि । श्रुत्यात्मास्तित्वे लिङ्गस्य दर्शितत्वात् लिङ्गस्य च प्रत्यक्षविषयत्वादेवेति चेत् न जन्मान्तरसम्बन्धस्याग्रहणात् आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितलौकिकलिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्रत्ययलिङ्गानि च वैदिकान्येव स्वमतिप्रभवाणीति कल्पयन्तो वदन्ति प्रत्यक्षानुमेयश्चात्मेति । सर्वथाप्यस्त्यात्मा देहान्तरसम्बन्धीत्येवं प्रतिपन्नदेहान्तरगतेष्टानिष्टप्राप्तिपरिहारोपायविशेषार्थिनस्तद्विशेषज्ञापनाय कर्म्मकाण्डं समारब्धम्” । अधिकारिभेदेनैव कर्म्मकाण्डे प्रवृत्तिः “लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ! । ज्ञानयोगेन सांख्यानां कर्म्मयोगेन योगिनाम्” इति गीतायामपि द्वैविध्योक्तेः अतएव “तमेतं ब्राह्मणा विविदिषन्ति वेदानुवचनेन यज्ञेन

"तपसा नाशकेन" इति श्रुत्यैव कर्म्मणां विविदिषाहेतु-
तोक्तेः विविदिषु यामेव कर्म्मकाण्डप्रतिपाद्यकर्म्मणा-
मुपयोग इत्याकरे स्थितम् ।

**कर्म्मकार** त्रि० कर्म्म करोति अभृत्या अण् उप० स०।
विना वेतनेन १कर्म्मकारके (वेगार) (काबाद) इति
प्रसिद्धे सङ्कीर्णजातिभेदे जातिशब्दे विवृतिः। "हरिणाक्षि !
कटाक्षेण आत्मानमवलोकय । नहि खड्गोविजानाति
कर्म्मकारं स्वकारणम्" उद्भटः ।

**कर्म्मकारिन्** त्रि०कर्म्म करोति कृ–णिनि क्रियां करोत् । कर्म्म
कारके "तान् विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः" मनुः

**कर्म्मकीलक** पु० कर्म्मणा कीलक इव । रजके जातिभेदे ।
त्रिका० । "कर्म्मक्षमं देहं आत्मैव धर्म्म इवाश्रितः" रघुः ।

**कर्म्मक्षम** त्रि०कर्म्मणि क्षमः ७त०। कर्म्मकरणसमर्थे "आत्म-

**कर्म्मक्षेत्र** न० कर्म्मणां क्रियानुष्ठानानां क्षेत्रम् । जम्बु-
द्वीपान्तर्गते नवसु वर्षेषु अनुष्ठानदेशे भारते वर्षे। नव-
वर्षाण्युक्त्वा "अत्रापि भारतमेव वर्षं कर्म्मक्षेत्रम् । अन्या-
न्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौम-
स्वर्गपदानि व्यपदिशन्ति" भाग०५,१७,१०,१२.कर्म्मभूमि-
रप्यत्र स्त्री। "उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" इत्युपक्रम्य
"कर्म्मभूमिरियं स्वर्गमपवर्गञ्च गच्छति" । "अत्र
सम्प्राप्यते स्वर्गोमुक्तिमस्मात् प्रयान्ति च । तिर्य्यक्त्वं
नारकित्वञ्च मध्यं चात्र गम्यते । न खल्वन्यत्र मर्त्यानां
कर्म्मभूमौ विधीयते" विष्णुपु० पराशरवाक्यम् ।

**कर्म्मग्रन्थि** पु० कर्म्मणां ग्रन्थिर्बन्धनमस्मात् । अज्ञानजन्य
वासनारूपे दोषे तस्यैव सकलप्रवृत्तिहेतुत्वात्तस्य कर्म्म-
बन्धनहेतुत्वात्तथात्वम् ।

**कर्म्मचण्डाल** पु० कर्म्मणा चण्डाल इव । "असूयकः पिशु-
नश्च कृतघ्नो दीर्घरोषकः । चत्वारः कर्म्मचाण्डाला जन्म-
तश्चापि पञ्चमः" वशिष्ठोक्तेषु असूयकादिषु चतुर्षु ।
२राहौ च । "उत्तिष्ठ गम्यतां राहो! त्यज्यतां चन्द्र-
सङ्गमः । कर्म्मचाण्डाल ! योगोऽयं मम पापक्षयं कुरु"
ग्रहणमुक्तिस्नानमन्त्रः । राहोश्च असूयकत्वाद्दीर्घदोष-
बत्त्वाच्च तथात्वम् ।

**कर्म्मचित्** त्रि०चितवान् चि–भूते क्विप् ६त०। १कृतकर्म्मणि ।
कर्म्मणि क्विप् ६त०। २कर्म्मणा चीयमाने च "कर्म्मचयान्
कर्म्मचितश्चेत् कर्म्मणैवाधीयन्ते कर्म्मणा चीयन्ते" शत०ब्रा०।
१०,५,२,६ ।

**कर्म्मचित** त्रि०कर्म्मणा चितः चि-क्त । कर्म्मणप्राप्ते "तद्यथेह
कर्म्मचितोलोकः क्षीयते एवमेवामुत्र पुण्यचितः" वेदपरि०श्रुतिः

**कर्म्मचेष्टा** स्त्री कर्म्मणि क्रियायै चेष्टा । क्रियानुष्ठानार्थे
चेष्टायाम् "आत्मजन्या भवेदिच्छा, इच्छाजन्या भवेत्
कृतिः । कृतिजन्या भवेच्चेष्टा, चेष्टाजन्या क्रिया भवेत्"
इत्युक्तेः चेष्टायाः क्रियाहेतुत्वेन तथात्वम् "कर्म्मचेष्टास्वहः
कृष्णः शुक्लः स्वप्नाय शर्वरी" मनुः ।

**कर्म्मचोदना** स्त्री कर्म्मणि कर्म्मावबोधने चोदना विधिः ।
कर्म्मविषये प्रेरणारूपे विधौ "कर्म्मावबोधनं चोदना
क्रियायाः प्रवर्त्तकं वचनमिति" मीमा० भा० ।
चोद्यते प्रवर्त्त्यतेऽनया करणे ल्युट् ७त०। २कर्म्मप्रव-
त्तिहेतौ ज्ञानज्ञेयज्ञातृरूपेऽर्थे च । "ज्ञानं ज्ञेयं परि-
ज्ञाता त्रिविधा कर्म्मचोदना" गीता । "ज्ञानमिष्टसाधन-
मितिबोधः, ज्ञेयमिष्टसाधनं कर्म्म, परिज्ञाता तज्ज्ञाना-
श्रयः त्रिविधा कर्म्मचोदना चोद्यते प्रवर्त्त्यतेऽनयेति
चोदना ज्ञानादित्रितयं कर्म्मप्रवृत्तिहेतुरित्यर्थः । यद्वा
चोदनेति विधिरुच्यते तदुक्तं भट्टैः—"चोदना चोपदेशश्च
विधिश्चैकार्थवाचिनः" इति ततश्चायमर्थः-उक्तलक्षणं
त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्म्मविधिः प्रवर्त्तते
इति" श्रीधरः ।

**कर्म्मज** त्रि० कर्म्मणो कर्म्मजन्यादृष्टात् जायते जन–ड ।
कर्म्महेतुके रोगादौ । रोगादिव्याधयो हि नानाविधाः
यथोक्तं भावप्र०—
"तेषु स्वाभाविकाः केचित् केचिदागन्तवः स्मृताः ।
मानसाः केचिदाख्याताः कथिताः केऽपि कायिकाः ।
तत्र स्वाभाविकाः शरीरस्वभावादेव जाताः । क्षुत्पिपासा
सुषुप्सा च जरामृत्युप्रभृतयः । अथवा स्वभावादुत्पन्ने
जाता स्वाभाविकाः सहजा इति यावत् । ते च जन्मा-
न्धत्वादयः । आगन्तवोऽभिघातादिजनिताः । अथवा
जन्मोत्तरभाविनः कामक्रोधलोभमोहभयाभिमान-
दैन्यपैशुन्यशोकविषादेर्ष्यासूयामात्सर्य्यप्रभृतयः । अथ
वोन्मादापस्मारमूर्च्छाभ्रममोहतमः संन्यासप्रभृतयः ।
कायिकाः पाण्डुरोगप्रभृतयः । कर्म्मजाः कथिताः
केचिद्दोषजाः सन्ति चापरे । कर्म्मदोषोद्भवाश्चान्ये
व्याधयस्त्रिविधाः स्मृताः । तत्र कर्म्मजाः व्याधयः
यत्नात्क्रियमाणेऽपि [illegible] केवलभोगमात्रक्षय्याः प्रायश्चित्तसाध्या
वा ततो जाताः न तु दुष्टाहारादिदोषेण जनितास्तथा ।
यथाशास्त्रन्तु निर्णीतो यथाव्याधिचिकित्सितः । न शमं

याति यो व्याधिः स ज्ञेयः कर्मजो बुधैः । दोषजाः मिथ्याहारविहारप्रकुपितवातपित्तकफजाः । ननु मिथ्याहारविहारिणामपि प्राक्तनसुकृतेन नैरुज्यं दृश्यत एव । ततो दोषजत्वेऽपि प्राक्तनं दुष्कर्मैव कारणम् तत् कथं दोषजा इत्युच्यन्ते ?। दोषजेष्वपि वस्तुतः व्याधिकारणं दुष्कर्म वर्त्तत एव किन्तु तत्र मिथ्याहारविहारदूषिता दोषा हेतवो दृश्यन्ते इति दोषजा इत्युच्यन्ते इति न माधिः । कर्मदोषोद्भवाः । स्वल्पदोषा गरीयांसस्ते ज्ञेयाः कर्मदोषजाः। अत्र कारणं दुष्कर्म प्रबलं यतो दोषाल्पत्वेऽपि व्याधेर्गरीयस्त्वन्तत्कर्मक्षयादेव क्षीणो भवति। दोषाः स्वल्पा अपि निदानस्थानीया दृश्यन्ते यतोऽतो दोषाणां कारणतां मन्यन्ते इति । कर्मक्षयात् कर्मकृता दोषजाः स्वस्वभेषजैः । कर्मदोषोद्भवा यान्ति कर्मदोषक्षयात् क्षयम् । दोषजाः स्वस्वभेषजैरिति दोषजेष्वादिकारणम् दुष्कर्म तद्भेषजाद्यद्व्ययादिजनित दुःखभोगेन कटुतिक्तकषायाद्यप्रियभक्षणादिजनितदुःखभोगेन च क्षयं यान्ति । येषां दुष्टा हेतवो दोषास्ते स्वस्वभेषजैः क्षयं यान्तीत्यर्थः । २कायिकवाचिकमानसकर्मभवे स्थावरादिजन्मनि "शुभाशुभफलं कर्म मनोवाग्देहसम्भवम् । कर्मजा गतयो नृणामुत्तमाधममध्यमाः" ३कर्मजातमात्रे पापादिदोषे च "तथा दहति वेदज्ञः कर्मजं दोषमात्मनः" मनुः। क्रियाजन्ये ४संयोगे ५विभागे च।"अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः। कीर्त्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः । तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः । आदिमः श्येनशैलादिसंयोगः परिकीर्त्तितः । मेषयोः सन्निपातो यः स द्वितीय उदाहृतः । कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः। तृतीयः स्यात् कर्मजोऽपि द्विधा परिकीर्त्तितः । अभिघातो नोदनञ्च शब्दहेतुरिहादिमः । शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् । एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः । विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत्" भाषा० ६वेगाख्यसंस्कारे च"मूर्त्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित्"भाषा० ७टङ्के पु० जटा० । ८कलियुगे पु० शब्दर० । ९क्रियाजकर्मभवादयोऽप्यत्रार्थे । १०धर्माधर्मरूपे गुणभेदे अदृष्टे वेदान्तिमते कर्मणः सूक्ष्मावस्थापन्ने १०संस्कारभेदे ११स्वर्गे १२नरके च अदृष्टद्वारा तयोः कर्मजन्यत्वात्तथात्वम् ।

**कर्म्मजित्** पु० जरासन्धवंश्ये मागधे नृपभेदे "अथ मागधराजानो भाविनो ये वदामि ते भविता सहदेवस्य (जरासन्धपुत्रस्य) मार्जारिर्यच्छ्रुतश्रवाः । ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः । सुनक्षत्रः सुनक्षत्रात् बृहत्सेनोऽथ कर्म्मजित्" भाग० ९,२२,३० ।

**कर्म्मठ** त्रि० कर्म्मणि घटते कर्म्मन्+अठच् । कर्म्मनिष्पादनार्थं घटमाने ।"स कर्मठः कर्म्म सुतानुबन्धि"भट्टिः ।

**कर्म्मणि** स्त्री कर्म्म नयति प्राप्नोति णी-ड सं-बा० ङीप् णत्वम् । कर्म्मसमाप्तौ कर्त्तव्यायां प्रायश्चित्तेष्टौ । "कर्म्मणिरेव तत्र प्रायश्चित्तिः" शत० ६,६,४,९ ।

**कर्म्मण्य** त्रि० कर्म्मणा सम्पादितम् । १कर्म्मणा सम्पन्ने पौर्य्ये सि०कौ०। कर्म्मणि साधु यत् । २कर्मकुशले सि०कौ०। "यतो वीरः कर्मण्यः सुदक्षः" ऋ० ३,४,९ ।"अकर्मण्य तिथिमलं विद्यादेकादशीं विना" ति०त० । ३वेतने स्त्री भोरस्वामिः । वेतनेन हि कर्मसाधनात् तस्य तथात्वम् ।

**कर्मण्यभुज्** त्रि० कर्मण्यां वेतनं भुङ्क्ते भुज-क्विप् ईत० ङ्यापोरिति ह्रस्वः । वेतनेन कर्मकारके भरण्यभुगित्यमरपाठान्तरमिति भोर० ।

**कर्मदेव** पु० कर्मणा देवः प्राप्तदेवभावः । त्रयस्त्रिंशद्देवभेदे । "स एकः कर्मदेवानामानन्दः ये कर्मणा देवानपि यन्ति अतिथयस्य चाकामहतस्य ते ये शतं कर्मदेवानामानन्दाः" तै०उ० । "कर्मदेवा ये वैदिकेनाग्निहोत्रादिना केवलेन देवानपि यान्ति देवा इति त्रयस्त्रिंशद्धविर्भुजः। इन्द्रस्तेषां स्वामी तस्याचार्य्यो बृहस्पतिः । प्रजापतिर्विराट् त्रैलोक्यशरीरो ब्रह्मा समष्टिव्यष्टिस्वरूपः संसारमण्डलव्यापी" शाङ्कर भा०। त्रयस्त्रिंशच्च देवाः श्रानन्दगिरिणा दर्शिताः । "अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः इन्द्रः प्रजापतिश्चेति" २कर्मणा देवलोकं गते च । "स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः" शत० ब्रा०१४,७,१,३५ । ये अग्निहोत्रादिश्रौतकर्मणा देवलोकं प्राप्नुवन्ति ते कर्मदेवाः" भा० ।

कर्मदेवताऽप्यत्र स्त्री । "ज्योतिष्टोमादिना स्वर्गं प्राप्ताः स्युः कर्मदेवताः" शब्दचि० । अग्निना कृत्वेऽश्वमेधादि कर्म कृत्वा महत्पदम् । अवाप्याजानदेवानां पूज्यास्ताः कर्मदेवताः" इति शब्दचि० पु० ।

**कर्मदोष** पु० कर्मैव दोषः,कर्म्मणि दोषः,कर्महेतुर्दोषो वा । १दुष्टे पापजनके हिंसादौ कर्मणि । "संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्" शरीरजैःकर्मदोषैर्याति

यक्ष्याच्छिन्नवासिन दृश्यते । मर्त्यः शास्त्रार्थनिर्दिष्टं वाक्यं यो दूषयत्यपि । पीड्यते नरकस्यान्ते स मुहुः पाकस्य विच्युतः । परत्र कर्मणा तेन नरकेषु विपच्यते । नरकान्ते व्याघ्रयोनिं व्याघ्रीं शौकरवायसीम् । पृथक्कर्मवशाद्योनिं गत्वा स परितप्यते । मानुषत्वमनुप्राप्य पूर्वोक्तेनोपलक्ष्यते" ।

३९. यक्ष्मरोगः । "यक्ष्मरोगस्य निदानं दुर्वसं सर्वरोगतः । सहायांस्तस्य वै राजन् ! कथयामि तवाग्रतः । सेनापतिः ज्वरमदस्य च पाण्डुरोगोदराक्ष्यरोऽप्यसरएव सहायमाषम् । कुष्ठावकः कासयक्षः सहायो यौ श्वासकासावपि मन्त्रिणौ च । स श्रुत्वैवंविधं घोरं यक्ष्मरोगं सुदारुणम् । प्रणम्याह मुनिश्रेष्ठं त्रिकालदर्शिनम् । राजोवाच । अस्य रोगस्य चोत्पत्तिर्जायते केन कर्मणा । केन दानेन विप्रेन्द्र ! परत्रापि न वर्द्धते । तत्सर्वं विस्तराद्ब्रूहि श्रोतुमिच्छामि यत्नतः । भृगुरुवाच । पुरा येन हतो विप्रो न्यासापहरणं कृतम् । वृत्तिच्छेदः कृतो येन मधुविघ्नकरस्य यः । सर्वस्वेन प्रजापीडा कृता येन स्वकर्मणा । स हतो दृश्यते याम्यैर्दूतैरेव भयङ्करैः । निवेश्यान्यतमे मार्गे दक्षिणद्वारिभीषणे । ततो नीत्वा यमस्थाने कम्पमानस्य पापिनम् । संयमन्यां यमस्याग्रे नीत्वा तं पापकारिणम् । हृष्टपुष्टाश्च ते दूताश्चित्रगुप्तान्तिकं ययुः । चित्रगुप्तश्च तं दृष्ट्वा क्रोधाद्रक्तविलोचनः । चित्रगुप्त उवाच । इमं पापं दुराचारं नरकं नय दुर्वहम् । योजनानां शतं यत्र कुम्भीपाकं सुदारुणम् । ताम्रकुम्भमये दीप्ते वालुकाङ्गारसंवृते । एवंविधे तु दुष्टात्मा क्षिप्तस्तत्र स्वकर्मतः । दह्यमानोऽतिदुःखेन यावदाभूतसंप्लवम् । कालान्ते स पुनः पापी कृमियोनौ च जायताम् । तत्र जीवति वर्षाणि दशपञ्च च भूपते ! दुष्कृतस्य क्षयं कृत्वा ततो भवति मानुषः । अत्युग्रयक्ष्मरोगेण पीड्यमानस्तु दृश्यते" ।

४०रक्तपित्तम् । "शृणु राजन् ! पुरा वृत्तं यस्येदं कथनं महत् । करटकारण्यसंस्थाने सुव्रतो नाम वै द्विजः । तस्य पुत्रो दुराचारः सर्वधर्मबहिष्कृतः । परद्रव्याभिलाषी च परभार्यारतिप्रियः । एकदा कामतस्तेन पितृव्यस्य वधूर्बलात् । धर्षिता तेन दुष्टेन यमस्य विषयङ्गतः । नरकान्ते कुले जातस्य कर्मक्षयमद्भुतम् । रक्तपित्तगदं भुङ्क्ते स्वकर्मार्जितदोषतः" ।

४१ गुल्मरोगः "अतःपरं प्रवक्ष्येऽहं गुल्मरोगं सुदारुणम् । यस्मादुत्पद्यते पुंसो मृतो वा याति यत्र वै । मर्त्यो याति तां योनिं येनोपशमनं भवेत् । कालोदनाम नरकं कृमिपूयपरिप्लुतम् । क्षिप्यते तत्र दुष्टात्मा एकाकी मिष्टभोजनः । अन्नदानागमनेनापि नरकं नाम दुर्गमम् । तस्मात् पिपीलिका भूत्वा जीवेद्वर्षचतुष्टयम् । दुष्कृतस्य क्षयं कृत्वा जायते तत्र मानवः । गुल्मरोगसमायाद्य वेदनैः परितप्यते । अगदैर्न शमं याति तदा पथ्यं तु कमजम्" ।

४२ शूलरोगः "शृणुष्व कथयिष्येऽहं नव लोकाधिपते ! । मूढा निरपराधेन ये लोकदुःखप्रदाः । शूलिशूलेन चाश्लेषा वाक्यदोषोद्गमेन च । तानेव निष्ठुरा दूता यमस्याज्ञाकराश्च ये । महाप्रेताश्मनिरये दीप्तशूलसमाश्रिते । भेदयन्तीव तत्रैव दत्तपाशैर्बद्धकानपि । भुङ्क्ते तु कदनं घोरं मन्वन्तरचतुष्टयम् । नरकान्ते ततो मर्त्यो जायते पक्षियोनिषु । पक्षी भूत्वा वियोगी स्यात् जीवेद्वर्षचतुष्टयम् । मानुषत्वमवाप्यैव शूलरोगातुरो भवेत्" ।

४३अर्शोरोगः । "शृणुष्व तव पुत्रेण पुरा जन्मान्तरे कृतम् । साध्वीमृतुमतीं ज्ञात्वा सविधिं नाम्नतस्य सः । एतत्कर्म कृतं तेन रहीतयाचिता च सः । आत्महा भ्रूणहा यस्तु कृतो येन च गोवधः । ते चार्शसा च स्वप्नान्ते भुङ्क्ते कष्टं सुदुःसहम् । पञ्चविंशत् समाः कोटी कल्पास्तामूलविंशतिः । तामिस्राख्यं महाघोरं नाकान्धतमसावृतम् । सर्पमदा समाकीर्णं दुर्भेद्यं जीववर्जितम् । स तिष्ठेद्विषयो दीनो येनेदं दुष्कृतं कृतम् । कर्मक्षयमनुप्राप्य पश्चाद्भवति मानुषः । सोऽर्शोगदवान् भूत्वा दुःखेन पीडितो भवेत्" ।

४४भगन्दररोगः । "गुदस्य द्व्यङ्गुले पार्श्वे पिटकस्फोटकाकृतिः । स भवेद्विकटाकारो दुर्गन्धो मर्मभेदकः । स वै भगन्दरो ज्ञेयः कर्मजो नोपशाम्यति । आचार्यभार्यागमनं ये कुर्वन्ति नराधमाः । पक्षपातमधर्मेण बालवृद्धधनापहाः । ते पतन्ति महाघोरे नरके च सुदारुणे । यः केशमूत्रपुरीषाक्तं भक्ष्यपिण्डकम् । चौरवेन्द्रयस्तु दुर्बुद्धिः कृलोयात् शोधनं च यः । स मृतस्तु शिवलाख्यं नरकं प्राप्य सीदति । रक्तकृम्यादिमीमांसुभक्ष्यमाणोऽतिदुःखितः । भुक्त्वायुतसहस्रं यावत्संख्यं कल्पेत् पुनः । सोऽप्यनेनैव रोगेण जन्मादावपि लक्ष्यते" ।

४५छर्दिः "शृणुष्व कपर्दीन्द्र ! कथयामि तवाग्रतः । नरा

कर्म्मस्थितेः सदुपहवीक्षितैश्च। तृतीयषष्ठगाः पापा लग्नेन्दुभ्यां शुभा मताः। निधनान्यगता नेष्टा विशेषाल्लग्नसंस्थिताः। एकोनविंशे वियति रविः खे, चन्द्रो धने २, चन्द्रसुतः ४, क्रमेण। त्रिर्वेदनन्दैकमितेः १६ऽर्के ईज्योऽष्ट भृगुः१ सुखं खे कुसुतो१२ऽस्तमीतिम्” जातके तच्चिन्ताप्रकारः।

**कर्म्माङ्ग** न० ६त०। विहितस्य यागादिकर्म्मणोऽङ्गे यथा दर्शादेः प्रयाजादि। देशकालादयोऽपि कर्म्माङ्गानि। यथाह गर्गः—“तिथिनक्षत्रवारादि साधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः”। “प्रधानस्य विधेयस्य कर्म्मणो गुणभावेनाङ्गत्वेन, तदुक्तं “कर्म्मावच्छिन्नं नैव बुद्धौ विपरिवर्त्तते। यस्मात्तु तदुपस्थानमुपादेये गुणो भवेत्” भट्टका० “प्रमाणान्तरावच्छिन्नं कर्म्म बुद्धौ प्रथमं न विषयीभवति प्राथमिकशब्दादेव तस्य कर्म्मण उपस्थितिरिति उपादेये स्वविधेये कर्म्मणि पूजादौ चन्द्रादिक्रियात्वेन तदवच्छिन्नकालत्वेन वा शुचितत्कालजीविनः कर्म्माधिकारात् प्रमाणान्तरलभ्यत्वेनाविधेयत्वात्तिथ्यादिर्गुणः” ति० त० रघु०। “फलवत्सन्निधावफलं तदङ्गमिति” न्यायेन फलवत्प्रकरणे पठितानामफलानां सर्वेषां तदङ्गत्वमवधेयम्।

**कर्म्माजीव** पु० कर्म्मणा आजीवः जीवनम्। १शिल्पादिकर्म्मद्वारा जीवनसाधने। स च नृणां जन्मलग्नावधिदशमभावे मेषादीनां द्रेक्काणनवांशद्वादशांशैः शिल्पादिकर्म्मविशेष आजीवे जातके उक्तः, तच्च आजीवशब्दे ६४१,४२पृ० दर्शितम्। कर्म्म जीवति अण्। २शिल्पादिकर्म्मजीविकावति त्रि०।

**कर्म्मात्मन्** पु० कर्म्मणा आत्मा आत्मभावो यस्य। संसारिणि स्वादृष्टोपनिबद्धशरीरयुक्ते १जीवे। “तस्मिन् स्वपिति तु स्वस्थे कर्म्मात्मानः शरीरिणः” मनुः। कर्म्मणि आत्मा मनो यस्य। २क्रियासक्तचित्ते च।

**कर्म्माध्यक्ष** पु० ७त०। क्रियासाक्षिणि कृताकृतावेक्षके।

**कर्म्मान्त** पु० कर्म्मणः कृषिकर्म्मणोऽन्तो यत्र। सम्यक्कृतकृषिकर्म्मणि १कृष्टभूमौ हेमच०। “अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च” मनुः। कर्म्मणः तत्फलस्यान्तो यत्र। २इक्षुधान्यादिसंग्रहस्थाने च। “शुचीनाकरकर्म्मान्ते भीरूनन्तर्निवेशने” मनुः। “कच्चिन्न सर्वे कर्म्मान्ताः परोक्षास्ते विशङ्किताः” भा०सभा० १६५ श्लो०। ६त०। ३कर्म्मसमाप्तौ च। “कर्म्मान्ते दक्षिणां दद्यात्” स्मृतिः”।

**कर्म्मार** पु० कर्म्म ऋच्छति ऋ—अण्। १कर्म्मकारके (कामार) जातिभेदे, “नमस्तक्षभ्योरथकारेभ्यश्च वो नमोनमः, नमः कुलालेभ्यः कर्म्मारेभ्यश्च वो नमोनमः” यजु० १६,२७। “तपसे कौलालं मायायै कर्म्मारम्” यजु० ३०,७, पुरुषमेधे “मायायै कर्म्मारं लौहकारम्” वेददी०। “कर्म्मारस्य निषादस्य रङ्गावतारकस्य च” मनुः। “ये धीवानोरथकाराः कर्म्मारा ये मनीषिणः” अथ० ३,५, २वंशभेदे (वेड़ुँयाश), ३कर्म्मरङ्गवृक्षे च राजनि०। ४कर्म्मप्रापरि त्रि० स्वार्थे कन्। कर्म्मारक कर्म्मरङ्गे वृक्षे (कामराङ्गा) पु० राजनि०।

**कर्म्मार्ह** पु० कर्म्मार्हति अर्ह-अण्। १पुरुषे राजनि०। तस्य कर्म्मकरणसमर्थत्वात्तथात्वम्। २कर्म्मकरणसमर्थे त्रि०।

**कर्म्माशय** पु० आशेरते पुरुषा अस्मिन् आ+शी-आधारे अच् कर्म्मणामाशयः। कर्म्मजन्ये धर्म्माधर्म्मरूपे गुणभेदे “क्लेशमूलः कर्म्माशयो दृष्टादृष्टजन्मवेदनीयः” पात०सू०। कर्म्मविपाकशब्दे च अस्य भाष्यविवरणे दर्शिते।

**कर्म्मिन्** त्रि० कर्म्मास्त्यस्य ब्रीह्या० इनि। व्यापारयुक्ते स्त्रियां ङीप् “कर्म्मिभ्यश्चाधिको योगी—तस्माद्योगी भवार्जुन!” गीता। २फलाभिसन्धानेन कर्म्मकर्त्तरि च। “यत्कर्म्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते” मुण्ड० उ०। “इष्टापूर्त्तादिकर्म्मिणां धूमादिमार्गेण चन्द्रमण्डलादिप्राप्तिः” शा० भा० “ऋत्विक्कर्षककर्म्मिणाम्” याज्ञ०।

**कर्म्मिष्ठ** त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे जने

**कर्म्मेन्द्रिय** न० कर्म्मणां वचनादीनां निमित्तमिन्द्रियम् अश्वघासादिवत् निमित्तार्थे ६त०। वचनादिकर्म्मकरेषु वागादिषु इन्द्रियेषु “पञ्चोक्त्यादानगमनविसर्गानन्दकाः क्रियाः। कृषिवाणिज्यसेवाद्यास्त्वेष्वेवान्तर्भवन्ति हि”। “वाक्पाणिपादपायूपस्थैरुक्तास्तत्क्रियाजनिः। मुखादिगोलकेष्वास्ते तत्कर्म्मेन्द्रियपञ्चकम्” पञ्चदश्यां तेषां नाम कार्य्याण्युक्तानि। “वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः। वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम्” सां०का०। “इन्द्रस्यात्मनश्चिह्नत्वादिन्द्रियमुच्यते” सां०कौ० व्याकृतञ्चैतदस्माभिः तद्दितौ।

“तेषामिन्द्रियशब्दार्थत्वे कारणमाह इन्द्रस्यात्मन इति। “इन्द्रोमायाभिः पुरुरूप ईयते इत्यादि” श्रुतौ इन्द्रशब्दस्यात्मार्थकत्वदर्शनात्, पाणिनिना “इन्द्रियमिन्द्रलिङ्गम्” इत्यादिना इन्द्रशब्दात् तल्लिङ्गाद्यर्थे घप्रत्ययेन निपा-

तितत्वात्तस्य तथात्वम् । करणव्यापारः कर्त्तृव्यापाराधीनः करणव्यापारत्वात् कुठारादिव्यापारवदिति करणव्यापारेण कर्त्तुरनुमानात् इन्द्रियादीनां पुरुषलिङ्गत्वम्" ।
अत्र विहरणशब्दस्य गतिपरत्वम् । सप्तसुक्तं शा० ति० । "ज्ञानेन्द्रियार्थाः शब्दाद्याः स्मृताः कर्मेन्द्रियाण्यपि । वाक्पाणिपादपायूपस्थसंज्ञान्याहुर्मनीषिणः । वचनादानगतयोविसर्गानन्दसंयुताः । कर्मेन्द्रियार्थाःसंप्रोक्ताः" "अश्वलिङ्गम्" राघवभट्टः ।

तेषां लक्षणनिर्णयार्थं द्वितीया कारिका या दर्शिता सा च कौ०व्याख्याता ।"पञ्चानां कर्मेन्द्रियाणाम्,कण्ठताल्वादिस्थानमिन्द्रियं वाक्,तस्या वृत्तिर्वचनम्"व्याकृतञ्च तदस्माभिः "एवं वागिन्द्रियस्य स्थानमुक्त्वा लक्षणकथनाय तद्वृत्तिमाह तस्यावृत्तिर्वचनमिति । तथा च वचनसाधनमिन्द्रियं वाक् । एवम् आदानसाधनमिन्द्रियं पाणिरित्यादि लक्षणम् । कारिकायां विहरणपदं चलनपरं तच्च गतिभेद । उत्सर्गः उदरात् मलस्यापसारणेन त्यागः। आनन्दः आनन्दविशेषजनको रमणीसंभोगात्मको व्यापारभेदः" । अत्र ताल्वादिस्थानमित्युक्त्या आदिपदात्'अष्टौ स्थानानि वर्णानामुरःकण्ठः शिरस्तथा । जिह्वामूलञ्च दन्तौष्ठं नासिका चैव तालु च" इत्युक्तानामुर आदीनां ग्रहणम् । अतएव शङ्खेन "हस्तौ पादावुपस्थश्च जिह्वा पायुस्तथैव च । कर्मेन्द्रियाणि पञ्चैव" इति जिह्वायाः कर्मेन्द्रियत्वोक्तिः सङ्गच्छते । इन्द्रियाणि च आहङ्कारिकाणीति सांख्या मन्यन्ते "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोड़शकः । सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्" इति सां०का० । "प्रकाशलाघवाभ्यामेकादशक इन्द्रियगणः सात्विकः वैकृतादहङ्कारात् प्रवर्त्तते" इति कौ० व्याख्यातञ्च तदस्माभिः ।
एकादशकगणस्य सात्विकत्वमुपपादयितुमाह प्रकाशलाघवाभ्यामिति"सत्त्वं लघु प्रकाशकम्"इति कारिकया लाघवस्य प्रकाशस्य च सत्वधर्मत्वस्योक्तेः इन्द्रियाणाञ्च प्रकाशकत्वात् लाघवाच्च सत्वकार्य्यत्वं निश्चितं, तथा च सात्विकादेवाहङ्कारात् तस्योत्पत्तिर्युक्ता । वैकृतात् विकृतमेव वैकृतन्तस्मादित्यर्थः" । इन्द्रियाणाञ्च यथा आहङ्कारिकत्वं तथा सां०सू०भाष्ययोः समर्थितम् ।

"अभिमानोऽहङ्कारः" "एकादश पञ्चतन्मात्रं तत्कार्य्यम्" सू० ।

"अहङ्करोतीत्यहङ्कारः कुम्भकारवत् अन्तःकरणद्रव्यं, स च धर्मधर्म्यभेदादभिमान इत्युक्तोऽसाधारणवृत्तितासूचनाय, यद्द्रव्या निश्चित एवार्थेऽहङ्कारममकारौ जायेते । अतो द्वयोः कार्यकारणभावानुसारेण वृत्तिमतोरपि कार्यकारणभाव उन्नीयत इति । एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्य्यमित्यर्थः। मयानेनेन्द्रियेणेदं रूपादिकं भोक्तव्यमिदं मे सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रियतद्विषयोत्पत्त्याहङ्कार इन्द्रियादिहेतुः लोके भोगाभिकामिनैव रागद्वारा भोगोपकरणार्जनदर्शनात् । "रूपरागादभूच्चक्षुरित्यादिना मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुरादेरुत्पत्तिस्मरणाच्चेति भावः । अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मकं मन एवादावहङ्कारादुत्पद्यत इति विशेष,स्तन्मात्रादीनां रागकार्य्यत्वादिति तत्रापि विशेषमाह सा०का० ।"सात्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात्" । "एकादशानां पूरणमेकादशकं मनः षोड़शात्मगणमध्ये सात्त्विकम् । अतस्तद्वैकृतात् सात्विकाहङ्काराज्जायत इत्यर्थः । अतश्च राजसाहङ्काराद्दशेन्द्रियाणि तामसाहङ्काराच्च तन्मात्राण्यपि मन्तव्यम् । "वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा । अहन्तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् । वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः । तैजसादिन्द्रियाण्येव ज्ञानकर्ममयानि च । तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः" इत्यादिस्मृतिभ्य एव निर्णयात् । अतएव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तम् । "सात्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात् । भूतादेस्तन्मात्रं स तामसस्तैजसादुभयम्" इति । तैजसो राजसः । उभयं ज्ञानकर्मेन्द्रिये । ननु देवतालयश्रुतिरित्यागामिसूत्रे करणानां देवतालयं वक्ष्यति तत्कथं कारिकयापि देवानां सात्विकाहङ्कारकार्यत्वं नोक्तमिति उच्यते समष्टिचक्षुरादिशरीरिणः सूर्यादिदेवता एव चक्षुरादिदेवताः श्रूयन्ते । अतश्च व्यष्टिकरणानां समष्टिकरणानि देवतेत्येव पर्यवस्यति । तथा च व्यष्टिसमष्ट्योरेकताशयेनात्र शास्त्रे, देवाः करणेभ्यो न पृथङ्निर्दिश्यन्ते । अतः समष्टीन्द्रियाणि मनोऽपेक्षयाल्पसत्त्वेन राजसाहङ्कारकार्यत्वेनैव निर्दिष्टानि । स्मृतिषु च व्यष्टीन्द्रियापेक्षयाऽधिकसत्त्वेन सात्त्विकाहङ्कारकार्यतयोक्तानीत्यविरोध इति मन्तव्यम् । तदेवमहङ्कारस्य त्रैविध्यान्महतोऽपि तत्कारणस्य त्रैविध्यं मन्तव्यम् । "सात्त्विको राजसश्चैव

तामसश्च त्रिधा महान्” इति स्मरणात् त्रैविध्यं चानयोर्व्यक्तिभेदात् प्रभेदाद्वेत्यन्यदेतत्। एकादशेन्द्रियाणि दर्शयति” भा०। “कर्मेन्द्रियबुद्धीन्द्रियैरान्तरमेकादशकम्” सू० “कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षुःश्रोत्रत्वग्रसनघ्राणाख्यानि पञ्च। एतैर्दशभिः सहान्तरं मन एकादशकमेकादशेन्द्रियमित्यर्थः।। चन्द्रस्य सङ्कातेश्वरस्य करणमिन्द्रियम्। तथा चाहङ्कारकार्यत्वे सति करणत्वमिन्द्रियत्वमिति”। “इन्द्रियाणां भौतिकत्वमतं निराकरोति”भा०। “आहङ्कारिकत्वश्रुतेर्न भौतिकानि” सू०। इन्द्रियाणीति शेषः। आहङ्कारिकत्वे च प्रमाणभूता श्रुतिः कालनुप्राप्याचार्यवाक्यान्मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते। प्रत्यक्षा श्रुतिस्तु “अहं बहु स्याम्” इत्यादि। ननु—“अन्नमयं हि सौम्य मनः” इत्यादिर्भौतिकत्वेऽपि श्रुतिरस्तीति चेन्न प्रकाशकत्वसाम्येनान्तःकरणोपादानत्वस्यैवोचिततयाहङ्कारिकत्वश्रुतेरेव सबलत्वात्। भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतयास्य मनोजन्यत्वाच्च। व्यष्टिमनआदीनां भूतसंसृष्टतयैव तिलतां भूतेभ्योऽभिव्यक्तिमात्रेण तु भौतिकत्वश्रुतिर्गौणीति। ननु तथाप्याहङ्कारिकत्वनिर्णयो न घटते? “अस्य पुरुषस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यम्” इत्यादिश्रुतौ देवतास्विन्द्रियाणां लयकथनेन देवतोपादानकत्वस्याप्यवगमात् कारण एव हि कार्यस्य लय इत्याशङ्कायाह भा०। “देवतालयश्रुतिर्नारम्भकस्य” सू० “देवतासु या लयश्रुतिः सा नारम्भकविषयिणीत्यर्थः, अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात्। अनारम्भकेष्वपि भूतेष्वात्मनो लयश्रवणाच्च। “स एष विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति” इत्यादिश्रुताविति भावः” भा०।

एतन्मूलतयैव शां०ति० “वैकारिकादहङ्काराद्वै वा वैकारिका दश। दिग्वातार्कप्रचेतोऽश्वि+वह्नीन्द्रोपेन्द्रमित्रकाः। तैजसादिन्द्रियाण्यासं स्तन्मात्रक्रमयोगतः”। इन्द्रियाणामधिष्ठातृदेवानाञ्च आहङ्कारिकत्वमुक्तम्।

कर्मेन्द्रियाणामधिष्ठातृदेवाश्च वाचः वह्निः, पाणेरिन्द्रः, पादस्य उपेन्द्रः, पायोः मित्रः, उपस्थस्य कः ब्रह्मा।

वेदान्तिमते च आकाशादीनां रजोंशैः वागादीनां क्रमेणोत्पत्तिः “रजोऽंशैः पञ्चभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु। वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे” पञ्चदश्युक्तेः तेषाञ्चाहङ्कारित्वं प्रमेयविवरणोपन्यासे निराकृतं, तच्च आत्मशब्दे ६६६ पृ० दर्शितम्, तेषामनुमानेन भौतिकत्वसिद्धिरिति ग्राम्यकतार्किकमतमपि तत्र निराचितं तत्रैव पृ० द्रष्टव्यम्। “तेषां रजोऽंशैर्जातानि क्रमात् कर्मेन्द्रियाणि च” शब्दचि०भागवतवाक्यम्।

**कर्व** दर्पे भ्वा०प०सक० सेट्। कर्वति अकर्वीत् चकर्व प्रनिकर्वति। कर्वटः कर्वुरः कर्वूरः।

**कर्व** पु० किरति विषयेषु चित्तम् कॄ—व। कामे उज्ज्व०। कामस्य चित्तविक्षेपकत्वात् तथात्वम्।

**कर्वट** पु० कर्व-अट। द्विशतग्राममध्ये सुन्दरस्थाने, यत्र गत्वा क्रयविक्रयादिना सन्निहितजनपदवासिनो जना जीवन्ति १ताहशे ग्रामे पुरे वा २नगरमात्रे च अमरटीका “कर्वटं द्विशतग्राममध्ये ग्रामोमनोहरः” हारा० उक्तेः न०च।३प्रचुरकण्टकसन्ताने ग्रामे च। ‘धनुःशतं परीणाहो ग्रामात् क्षेत्रान्तरं भवेत्। द्वे शते कर्वटस्य स्यात् नगरस्य चतुःशतम्” याज्ञ० “कर्वटस्य प्रचुरकण्टकसन्तानस्य ग्रामस्य” मिता० कूर्मविभागे प्राच्यां दिशि वृ०सं० उक्ते ४देशभेदे “अथ पूर्वस्यामञ्जनवृषभध्वजपद्ममाल्यवद्गिरयः। व्याघ्रमुखसुह्मकर्वटचान्द्रपुराः शूर्पकर्णाश्च”। ‘ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा। सुह्मानामधिपं चैव ये च सागरवासिनः” भा० स० २९ भीमप्राचीविजये। त्रिकाण्डशेषे तु “चतुरष्टशतग्रामान्तर्ग्रोमसु खर्कटो” इत्युक्तेः ५ अष्टशतग्राममध्यस्थग्रामे च पु०।

**कर्वर** न० कृ-वरच्। १कर्मणि निरु०। “अन्यदद्य कर्वरमन्यदु” ऋ० ६,२४,५। ‘‘कर्वरं कर्मनामैतत्” भा०। कृ-विक्षेपे वरच्। २व्याघ्रे ३राक्षसे च पुंस्त्री उज्ज्व० जातित्वात् स्त्रियां ङीष्४निशायां स्त्री विश्वः विस्वात् ङीष्। कर्वरीत्येव। सा च ५हिङ्गुपत्राम् जटाध०६यिशायां मेदि०।

**कर्वुदार** पु०कर्व दर्पे उण् तं दारयति दृ-अण्। कोविदारवृक्षे

**कर्वु(र्वू)र** पु० कर्बु (र्बू)रशब्दार्थे।

**कश्य** पु० कश-यत्। कर्चूरे, (कचूर) राजनि०।

**कर्ष** पुंन० कृष—अच् कर्मणि घञ् वा। “दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोड़शभिश्च कर्षम्” लीला० उक्ते अशीतिरक्तिकापरिमाणे षोड़शमाषके मानभेदे २ तन्मिते सुवर्णे च।३विभीतकवृक्षे पु०शब्दरत्ना०। भ्वा०कृष—भावे घञ्।४आकर्षणे। तुदा०कृष—भाजे घञ्।५विलेखने च। अत्र प्रसङ्गात् पौराणिकशास्त्रकर्मोचित स्मृत्यादिपरिभाषितवैद्यक परिभाषितमानभेदउच्यते। तत्र पौराणिकादिमा

समाह हेमा० दा० ख० मनुः "लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि। ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः। जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते। त्रसरेण्वष्टकं ज्ञेया लिक्षैका परमा यतः। ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः। सर्षपाः षट् यवोमध्यस्त्रियवन्त्वेक कृष्णलः। पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः पलानि धरणं दश। द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः। ते षोडश स्याद्धरणं पुराणश्चैव राजतः। कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः। धरणानि दश ज्ञेयं शतमानस्तु राजतः। चतुःसौवर्णिको निष्कोविज्ञेयस्तु तत्प्रमाणकम्" याज्ञवल्क्यः "जालसूर्य्यमरीचिस्थं त्रसरेणू रजः स्मृतम्। तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते। गौरस्तु ते त्रयः षट् ते यवोमध्यस्तु ते त्रयः। कृष्णलः, पञ्च ते माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्। द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते। शतमानन्तु दशभिर्धरणैः पलमेव च। निष्कः सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः" व्याह विष्णु. "जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञं, तदष्टकं लिक्षा, तत्त्रयं राजसर्षपः, तत्त्रयं गौरसर्षपः, ते षट् यवः, तत्त्रयं कृष्णलः, तत्पञ्चकं माषः, तद्द्वादशकमक्षार्द्धं स चतुर्माषकं सुवर्णः, तच्चतुःसौवर्णिको निष्कः। द्वे कृष्णले रूप्यमाषकः ते षोडश धरणम्" "ताम्रिकः कार्षापणः पण" कात्यायनः "माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु। काकिणी तु चतुर्भागो माषस्य परिकीर्त्तिता। पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी। कार्षापणप्रमाणं तु तन्निबद्धमिहैव यत्। ते द्वादश सुवर्णस्तु दीनारस्तु लिकः स्मृतः" नारदः "कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते। पणो निबद्धः पूर्व्वस्यां षोडशैव पणाः पलम्। वृहस्पतिरपि "यवः स्यात् सर्षपैः षड्भिर्गुञ्जा चैका त्रिभिर्यवैः। गुञ्जाभिः पञ्चभिश्चैको माषकः परिकीर्त्तितः। भवेत् षोडशभिर्माषैः सुवर्णस्तैः पुमः स्मृतः। चतुर्भिः पलमेकन्तु दश ते धरणं विदुः"। "अष्टभिर्भवति व्यक्तस्तण्डुलः गौरसर्षपैः। स वैणवयवः प्रोक्तो गोधूमं चापरे जगुः"। विष्णुगुप्तः "पञ्चगुञ्जोभवेन्माषः शाणश्चैव चतुर्गुणैः। कलञ्जं धरणं प्राहुर्मणिमानविशारदाः। मञ्जाटिकाकलञ्जस्तु तौल्ये गुञ्जाद्वयं विदुः। मञ्जाटिका विंशतिस्तु धरणं तद्विदां मतम्। स्थूलमध्यातिसूक्ष्माणां सूक्ष्माणामपि स्मृतम्"। "दीनारोरोपकैरष्टाविंशत्या परिकीर्त्तितः। सुवर्णसप्ततिसमोभागोरोपक इष्यते" प्रकारान्तरेणाप्याह सुश्रुते यथावन्मध्यपाककाले निष्पन्नधान्ययवादय सुवर्णमाषः पञ्च वा गुञ्जाः सुवर्णमाषकः ते षोडश सुवर्णः एवं प्रमाणसिद्धस्य द्वितीया संज्ञा कर्ष इति चतुष्कर्षं पलं पलानां शतेन तुला विंशतितौलिको भारः अस्यैव भारस्य उदतौलिक इति द्वितीया संज्ञा" दानखण्डे हेमाद्रिः। एतेषां मानभेदः शक्तितारतम्यापेक्षया पाञ्चतावेदनार्थः।

वैद्यकपरिभाषितमानं भावप्र०।

"न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित्। अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया। चरकस्य मतं वैद्यैराद्यैर्यस्मान्मतं ततः। विहाय सर्वमानानि मागधं मानमुच्यते। त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः। त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते। जालान्तरगतैः सूर्य्यकरैर्वंशी विलोक्यते। षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका। तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः। यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम्। षड्भिस्तु रत्तिकाभिः स्यान्माषको हेममानके। माषैश्चतुर्भिः शाणः स्याद्धरणः स निगद्यते। टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते। क्षुद्रको वटकश्चैव द्रङ्क्षणः स निगद्यते। कोलद्वयन्तु कर्षः स्यात् स प्रोक्तः पाणिमानिका। अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्। विडालपदकं चैव तथा षोडशिका मता। करमध्यो हंसपदं सुवर्णं कवलग्रहः। उदुम्बरञ्च पर्य्यायैः कर्षमेव निगद्यते। स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा। शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिराम्रं चतुर्थिका। प्रकुञ्चः षोडशी विल्वं पलमेवात्र कीर्त्त्यते। पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते। प्रसृतिभ्यामञ्जलिः स्यात्कुडवोऽर्द्धशरावकः। अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका। शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः। शरावाभ्यां भवेत् प्रस्थः चतुःप्रस्थैस्तथाढकः। भाजनं कांस्यपात्रं च चतुःषष्टिपलश्च सः। चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्म्मणः। उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञितः। द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकः।

भूर्पाभ्याञ्च भवेद्द्रोणो वाहो गोणी च सा स्मृता । द्रोणैश्चतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः । चतुःसहस्रपलिका षण्णवत्यधिका च सा । पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः । तुला पलशतं ज्ञेयं सर्वत्रैवैष निश्चयः । माषटङ्काक्षबिल्वानि कुडवप्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् । मागधपरिभाषायां षड्रत्तिको माषश्चतुर्विंशतिरत्तिकष्टङ्कः षण्णवतिरत्तिकः कर्षः । अयञ्चरकसम्मतः । सुश्रुतमते पञ्चरत्तिकोमाषो विंशतिरत्तिकष्टङ्कोऽशीतिरत्तिकः कर्षः । अयमेव कालिङ्गपरिभाषायामपि यतस्तत्राष्टरत्तिकोमाषो द्वात्रिंशद्रत्तिकष्टङ्कः सार्द्धटङ्कद्वयमितः कर्षः । गुञ्जादिमानमारभ्य यावत् स्यात्कुडवस्थितिः । द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम् । प्रस्थादिमानमारभ्य द्विगुणं तद्द्रवार्द्रयोः । मानन्तथा तुलायास्तु द्विगुणं न क्वचित् स्मृतम् । मृद्वृक्षवेणुलोहादेर्भाण्डं यच्चतुरङ्गुलम् । विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुडवं वदेत् । इति मागधमानम् । कालिङ्गमानम् "यतो मन्दाग्नयो ह्रस्वा हीनसत्वा नराः कलौ । अतस्तु मात्रा तद्योग्या प्रोच्यते सुश्रुसम्मता । यवो द्वादशभिर्गौरसर्षपैः प्रोच्यते बुधैः । यवद्वयेन गुञ्जा स्यात् त्रिगुञ्जो वल्ल उच्यते । माषो गुञ्जाभिरष्टाभिः सप्तभिर्वा भवेत् क्वचित् । चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च । गद्याणो माषकैः षड्भिःकर्षः स्याद्दशमाषिकः । चतुःकर्षैः पलं प्रोक्तं दशशाणमितं बुधैः । चतुःपलैश्च कुडवःप्रस्थाद्याः पूर्ववन्मताः । स्थितिर्नास्त्येव मात्रायाः कालमग्निं वयोबलम् । प्रकृतिं दोषदेशौ च दृष्ट्वा मात्रां प्रकल्पयेत् । नाल्पं हन्त्यौषधं व्याधिं यथाम्भोऽल्पं महानलम् । अतिमात्रं च दोषाय शस्यो यस्ये बहूदकम्" ।

कर्षं नित्यमर्हति ठञ् । कार्षिक कर्षपरिमाणार्हे "कार्षिकस्तार्षिकः पणः इत्यमरः" । नित्यकर्षणार्हे क्षेत्रभेदे च घञन्तकर्षस्य "कर्षात्वतो घञोऽन्त उदात्तः" पा० अन्तोदात्तता अत कर्षेतिशपा निर्द्देशात्तुदादेराद्युदात्ततेति सि०कौ० ।

**कर्षक** त्रि० कृष–विलेखने । १ क्षेत्रकर्षणकारके (चषाण) "कश्चिद्वीजं भक्तञ्च कर्षकस्यावसीदति" भा०स० ५अ० "धर्म्येन कर्षकं चक्रं दुर्बलं मम पुत्रकम् । प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीड़ितम्" भा० ८ अ० सुरभेर्वाक्यम् "कालप्राप्तमुपासीत शस्यानामिव कर्षकम्" भा०व० २५८ अ० । "तं समीरण इव प्रतीक्षितः "कर्षकेण वलजां पुपूषता" माघः२लेखके ३आकर्षके च ।

**कर्षण** न०कृष०भावे ल्युट् । लाङ्गलादिना भूमेर्विलेखने (चाष देओया) हेम०।"ऋतं तु याचितं भैक्ष्यं प्रमितं कर्षणं स्मृतम्" मनुः। कृषिशब्दे विवृतिः । ण्या० कृष–ल्युट् । २आकर्षणे च (टाना) "भज्यमानमतिमात्रकर्षणात्" रघुः"शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा" मनुः। ३क्षीरिणीवृक्षे स्त्री राजनि०गौरा०ङीष् ।

**कर्षणि** स्त्री कृष–अनि । असत्यां स्त्रियाम् उणादिकोषः शब्दकल्पद्रुमे उक्तम् । तच्चिन्त्यम् "कृषेरादेश घः" उणा० २,१०५सू० धर्षणिरित्यस्यैव सिद्धेः कर्षणिरिति पाठो लिपिकरप्रमादकृतः। अतएव उज्ज्वलदत्तेन"धर्षणि बन्धकीत्युक्ता" धृषेरनिप्रत्ययेन सिद्धे यौवनप्रार्थम्" इत्युक्तम्

**कर्षफल** पु०कर्षः तन्मात्रं फलमस्य । १विभीतकवृक्षे, अमरः २आमलक्याम् स्त्री रत्नमाला टाप् ।

**कर्षापण** पु० कर्षेणापणाते क्रीयते । षोड़शपणपरिमाणे (काहन) कर्षस्य षोडशमाषकमितत्वेन षोडशभिः पणैस्तस्य क्रयणात् तत्संख्यासाम्यात् तथात्वम् ।"अशीतिभिर्वराटकैः पण इत्यभिधीयते । ते षोडश पुराणं स्यात् रजतं सप्त भिस्तु तैः"गौतमेन षोड़शपणेषु पुराणशब्दस्य परिभाषितत्वात् "द्वात्रिंशत्पणिका गावो वत्सः पौराणिकोमतः" कात्यायनेन द्वात्रिंशत्पणानां गोमूल्यतयाभिधानेन "धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका । कार्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता" षट्त्रिंशन्मते पुराणकार्षापणयोः पर्यायतादर्शनाच्च तथात्वता । ततः प्रज्ञा०स्वार्थे अण् । कार्षापणोऽप्यत्र अर्द्धर्चादि०तेन पुंन०।

**कर्षिन्** त्रि० कृष—आकर्षे णिनि । आकर्षके । "तस्यैरावतसुखरसञ्चलकर्षिणस्ते" रघुः । स्त्रियां ङीप् ।"प्राणकान्तमध्वगस्य कर्षिणीः" रघुः । ङीवन्तः २क्षीरिणीवृक्षे ३अश्वमुखबन्धनरज्ज्वांस्थितलौहभेदे कर्णिकायां च स्त्री जटा०

**कर्षू** पु०कृष–ऊ । १करीषानले (घुटेर आगुन)। २कुल्यायां स्त्री अमरः । ३इष्टखाते मेदि० । इष्टखातन्तु "चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदधःखाता वितस्त्यायतास्तिस्रः कर्ष्वः कुर्यात्" प्रा० वि० विष्णुक्तप्रमाणकगर्त्तभेदः । "ततः कर्षूः कुर्यात् तन्मूले प्रागुदगन्ना प समाधानं कृत्वा पिण्डनिर्वपणम्" "कर्षूत्रयमूले पुरुषाणां, कर्षूत्रय-

मूले स्रोतसाम् । पुष्यकर्णूलयं मात्रेणोदकेन पूरयेत् श्रोत्रकर्णूलयं मात्रेन पयसा दध्ना मांसेन, पयसा च प्रत्येकं कर्णूलयं पूरयित्वा जपेत्" विष्णु० । ४गर्त्त-माले च । "कर्णूवीरणवति" कात्या० २१,३ २६ । "कर्णूः कुहर उच्यते" कर्कः अस्य स्त्रुत्वान्तमपि । "दक्षिणतः कुटिले कर्णू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीदक्षस्याः" कात्या०२१,३,२६ । "श्मशानत उत्तरतः कुटिले कर्णू गर्त्तौ खात्वा" कर्कः ।

**कर्हि** अव्य० कस्मिन् काले किम्+र्हिल् कादेशः । अनद्यतने कस्मिन् काले इत्यर्थे । कर्हि स्वित्तदिन्द्र यन्नृभिः" ऋ० ६,३५,२ ।

**कर्हिचित्** अव्य० कर्हि+चित् सुप्त० पा० मते भिन्नं पदद्वयम् । कस्मिंश्चित्काले इत्यर्थे । "अग्निना यन्न कर्हिचित्" ऋ०५,७४,१० । अतएव पदकाराः कर्हि,चित् । इति भिन्नपदतया पेठुः "यदद्य कर्हि कर्हिचित्" ऋ०८,७३,५ ।

**कल** संख्यायां सक० शब्दे अक०भ्वा०आत्म०सेट् । कलते अकलिष्ट चकले प्रनिकलते ।

**कल** गतौ संख्याने च अद० चुरा० उभय० सक० सेट् । कलयति ते अचकलत् त । कलयाम्–बभूव आस–चकार चक्रे । गत्यर्थत्वात् ज्ञानार्थत्वमपि । "कलयन्त्यनुलक्षणनेकलयम्" माघः "व्यालनिलयमिलनेन गरलमिव कलयति मलयसमीरम्" जयदे० पक्षणे "कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरौ" जयदे० । संख्यानञ्चात्र गणनं ज्ञानभेदश्च । "स पश्चात् संपूर्णः कलयति धरित्रीं तृणसमाम्" नीतिः "कलयेदमानमनसं सखि! माम्" माघः । "वाचामाचकलत् रहस्यमखिलं यच्चाक्षपादस्फुराम्" मल्लि० । उच्चारणे च "माद्यन्तः कलयन्तु चूतशिखरे,कोकिलाः पञ्चमम्" । ग्रासे "कालः कलयतामहम्" गीता । "कलनात्सर्वभूतानां स कालः परिकीर्त्तितः" ति०त० विष्णुध० । कलनीयम् कलयितव्यम् कलयिता कलितः । कलयन् कलयमानः कलयितुम् कलयित्वा आकलय्य । "कलितललितवनमालम्" जयदे० "करकलितकपालः कुण्डली दण्डपाणिः" वटुकस्तवः ।

अव–अवगमे अवकलयति वि+अव वियोजने "यदि व्यक्तं युक्तिव्यवकलनमार्गेऽसि कुशला" लीला० ।

आ+बन्धने "सुवर्णसूत्राकलिताधराम्बराम्, माघः ज्ञाने च" "वाचामाचकलत्" मल्लि० । "मकरध्वजहिरदमाकलयत्" "मुक्तावलीराकलयाञ्चकार" इति च माघः ।

प्रति आ+प्रतिबोधे प्रत्याकलितखदुर्नयः" दशकु० ।

उद्+उत्क्षिप्य पक्षणे "स तस्य हस्तोत्कलितस्तदासुरो विक्रीडतो यद्वदहिर्गरुत्मतः" भाग०७,८,२६ ।

सम्+एकसंख्यापादनरूपे योगे । "अथ संकलनव्यवकलनयोः करणसूत्रम्" "संकपदघ्नपदार्धमथैकाद्यङ्कयुतिः किल सङ्कलिताख्या" लीला० ।

**कल** मोदने प्रेरणे चुरा०उभय०सक०सेट् । कालयति ते अचीकलत् त । कालयां बभूव आस चकार चक्रे । कालयितव्यः कालनीयः । कालयिता कालितः कालयन् कालयमानः । कालयित्वा आकाल्य । कर्मणि काल्यते अकालि अकालयिषाताम् अकालिषाताम् । "गवां शतसहस्राणि त्रिगर्त्ताः कालयन्ति ते" भा०वि० १००,७ । "गावो न काल्यन्त इदं कुतो रजः" भाग०४,५,८ । सा गौस्तत्सकलं सैन्यं कालयामास दूरतः" भा०आ०६६९० ।

**कल** पु० कल–शब्दे घञ् नि० अवृद्धिः । मधुराव्यक्ते ध्वनौ अमरः । "सारसैः कलनिर्ह्रादैः" "कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतम्" "निनादु भास्वत् कलनूपुराणाम्" रघुः । "कलपक्षिगणोरवसुन्दरि मधुः" । "कलकाञ्चि काञ्चिदरुणत्तरुणः" माघः । कलप्रधाना काञ्चिर्यत्र एवं कलहंस इत्यादौ या०त० समासस्तेन तस्य न तद्गुणार्थता । अतएवामरेण "कलो मन्द्रस्तु गम्भीरस्तारोऽत्युच्चैस्त्रयस्त्रिषु" मन्द्रादीनां त्रयाणामेव त्रिलिङ्गत्वकथनम् । "उदकण्ठि कण्ठपरिवर्त्तिकलस्वरशून्यगानपरया परया" माघः । कड–मदे अच् डस्य लः । २शुक्रे चरमधातौ न० मेदि० । ३कोलिवृक्षे पु० शब्दच० । ४शालवृक्षे पु० राजनि० । ५अजीर्णे त्रि० मेदि० । कलास्यास्ति अच् । कलान्विते अवयवे च । [स्त्रियां जातित्वात् ङीष् ।

**कलक** पुंस्त्री कल–वुन् ण्वुल् । मत्स्यभेदे हेमच० ।

**कलकण्ठ** पुंस्त्री कलः कलप्रधानः कण्ठोऽस्य । १कोकिले २हंसे, ३पारावते च । जातित्वेऽपि संयोगोपधत्वात् स्त्रियां न ङीष् किन्तु स्वाङ्गत्वात् ङीप् । कलध्वनियुक्तकण्ठके त्रि० स्त्रियां ङीप् ।

**कलकल** पु० कलप्रकारः गुणवचनत्वात् प्रकारे द्वित्वम् । कोलाहले । "चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया" माघः । कलस्य शालवृक्षस्य कला यत्र । २शालनिर्यासे मेदि० ।

**कलकीट** पु० कलप्रधानः कीटः शा०त० । कीटभेदे । तत्र भवः पचाद्या० अण् । कालकीट तद्भवे त्रि० ।

**कलकूट** पु० नगरभेदे राजनि० । ततः भवार्थे तद्राजार्थे च "साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ्" पा० इञ् । कालकूटि तद्भवे त्रि० तन्नृपे च । इञश्चास्त्रियां बहुषु लुक् । कलकूटास्तद्देशवासिषु तन्नृपेषु च स्त्रियां तु न लुक् । कालकूट्य इत्येव । [जातित्वात् ङीष्

**कलघोष** पुंस्त्री कलो घोषोऽस्य । कोकिले शब्दर० स्त्रियां

**कलङ्क** पु० कलयति क्विप् कल् चासौ अङ्कश्चेति, कं ब्रह्माणमपि लङ्कयति गच्छति लकि—गतौ अण् वा । १चिह्ने २अपवादे, ताम्रादिधातूनां ३मलभेदे (कलङ्कान), ताम्रादियोगात् ४अम्लादेर्विकारे च मेदि० । "शशकपाणकरचेषु कलङ्काः" काद० । "धारानिबद्धेव कलङ्करेखा" "मत्तः सदाचारशुचेः कलङ्कः" रघुः । "ताम्रवर्ण्यश्च प्रकृषो मन्दरश्मिर्दिवाकरः । अदृश्यत कलङ्काङ्कः धंसतो धूमकेतुना" रामा० । ततः अस्त्यर्थे इनि । कलङ्किन् तद्युक्ते त्रि० स्त्रियां ङीप् । "कलङ्की जायते त्रिल्वे" ति० त० स्मृतिः । ततः तारका० जातार्थे इतच् । कलङ्कित जातकलङ्के त्रि० ।

**कलङ्कष** पुंस्त्री करेण कषति वा० खच् मुम् च रस्य लः । १सिंहे शब्दमा० । जातित्वात् स्त्रियां ङीष् । २करताल्यां स्त्री शब्दरत्ना० टाप् ।

**कलङ्कुर** पु० कं जलं लङ्कयति लकि—गतौ णिच्—उरच् । जलानामावर्त्ते स्वतोजलभ्रमे त्रिका० ।

**कलञ्ज** पु० केतिशब्दं चञ्जति भाषते क इत्यव्यक्तानुकरणम् चजि-अण् । विषाक्तास्त्रेण हते १मृगे, २पक्षिणि च । ३तन्मांसे न० "न कलञ्जं भक्षयेदिति" श्रुतिः । ४ताम्रकूटे च (तामाक) "कलञ्जस्य वेष्टमधूमपानात् स्याद्दन्तशुद्धिर्मुखरोगहानिरिति" वैद्यके तत्सेवनात् मुखरोगहान्यादि उक्तम् । ५परिमाणभेदे च । कर्षशब्दे भावप्र० तन्मानभेदोद्देशः ।

**कलञ्जाधिकरण** न० "न कलञ्जं भक्षयेदित्यादिवाक्यमधिकृत्य पञ्चावयवन्यायभेदे स च न्यायः यथा किं यदा कदापि तद्भक्षणनिषेधः । उत सर्व्वदेति संशयः । यदा कदाचिन्निषेध इति पूर्व्वपक्षः सर्व्वदा तन्निषेध इति सिद्धान्तः । तदेतत्भङ्ग्या एका० त० दर्शितं यथा "न कलञ्जं भक्षयेत्" इति श्रुतिः कलञ्जभक्षणाभावविषयकं कार्य्यमित्यर्थः । तत्र कालविशेषानुपादानान्निषिध्यमानक्रियायां प्रवृत्तिमतोनिषेधविधावधिकाराद्यावत्कालमेव तस्यां तस्य निवृत्तिः । न हि कलञ्जभक्षणादुद्यतः कुतश्चित् कारणान्निवृत्तस्य निषेधानुपालनं सकृद्वृत्तमिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदैव निषेधविधिरपि तं निवर्त्तयति । न हि कलञ्जस्य भक्षणमुपक्रम्य यावत् कालं तद्भक्षयति । अतस्तदितरकाले निवृत्तिः सिद्धैवेति भवति विफलोविधिः । ननु मासौ निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेः । सत्यं, प्रवृत्त्युपाधिना विनाशं प्राप्तान् प्रागभाव एव प्रवृत्तिनिराकरणात् साध्यमानोनिवृत्तिरुच्यते न तु प्रवृत्तिरपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमत एव निषेधविधावधिकारः । यत्तु "मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा । यदनागतभावस्य वर्ज्जनं तन्निवर्त्तनम्" इति । अत्रापिशब्देनाप्रवृत्तमात्रसमुच्चयान्न विरोधः । भूतचेष्टावत इति । "भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते । प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तु ना" इति मेदिन्युक्तेः भूते प्राप्ते निषेध्ये चेष्टावत इत्यर्थः । ततश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते । प्रागभावश्चानादिसंसर्गाभावमात्रपरः सचाप्रवृत्तस्य भक्षणकारणमननुतिष्ठतः सिध्यत्येव । तस्मात् सकृत्क्रियापर्य्यवसायित्वे विफलोविधिः । कादाचित्काकरणस्य निषेधमन्तरेणापि प्राप्तेः । न च स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्त्तृकत्वमप्यङ्गं विषयमात्रामनुष्ठानाधीनसिद्धत्वान्निषेधनियोगानामितिकर्त्तव्यताकाङ्क्षाविरहात् अतएव शुचित्वमपि तत्र नाङ्गम् । तस्मान्निषेधविधिषु काकदन्तोदेवदत्तस्य गृहाइत्यादिवत्तटस्थत्वेनाधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यं पुनर्निमित्तान्तरवन्न सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिः"।

यथा चात्र निवृत्तेरेव बोध्यता न प्रवृत्त्यभावस्य तथा समर्थितं वृहदारण्यकब्राह्मणभाष्ययोः यथा—

"प्रतिषिद्धानिष्टफलसम्बन्धश्च वेदादेव विज्ञायते न चानुष्ठेयः सः । न च प्रतिषिद्धविषये प्रवृत्तक्रियस्याकरणादन्यदनुष्ठेयमस्ति । अकर्त्तव्यताज्ञाननिष्ठतैव हि परमार्थतः प्रतिषेधविधीनां स्यात् । क्षुधार्त्तस्य प्रतिषेधज्ञानसंस्कृतस्याभक्ष्येऽभोज्ये वा प्रत्युपस्थिते कलञ्जाभिशस्ताद्याविदं भक्ष्यमदो भोज्यमिति वा ज्ञानमुत्पन्नं तद्विषयया प्रतिषेधज्ञानस्मृत्या बाध्यते मृगतृष्णिकायामिव

स्तुयात्नाया गीतम् । शशिध्वजकन्यया कल्केर्विवाहः । शशिध्वजस्य हरिभक्तिकारणम् । शशिध्वजस्य पूर्वजन्मवृत्तान्तकथनम् । भक्तिकथनम् । हरिभक्तस्य संसारप्रवृत्तिकारणम् । द्विविदोपाख्यानम् । कृष्णावतारवृत्तान्तः । कल्केः काञ्चनपुर्यां प्रवेशः । विषकन्याशापनाशः । कल्केरनुचराणां पृथक् पृथक् राज्येऽभिषेकः । कल्केः शम्भले प्रतिगमनम् । सत्ययुगप्रवर्त्तनम् । मायास्तवः । विष्णुयशसो राजसूययज्ञारम्भः । नारदस्यागमनम् । मायाजीवयोः कथोपकथनम् । विष्णुयशसो वनगमनम् । परशुरामस्यागमनम् । रुक्मिणीव्रतकथनम् । कल्केः पत्नीभिर्विहारः । शम्भले देवानामागमनम् । कल्केः स्वर्गारोहणम् । गङ्गास्तोत्रम् । कल्किपुराणस्यानुक्रमणिका । कल्किपुराणश्रवणादिफलम्” ।

कल्प पु० कल्पते समर्थो भवति स्वक्रियायै विरुद्धलक्षणया असमर्थो भवति वाऽत्र, कृपू सामर्थ्ये विरुद्धलक्षणया असामर्थ्ये वा आधारे घञ् कल्पयति सृष्टिं विनाशं वात्र कृप—णिच्—आधारे अच् । ब्रह्मणो रात्रिरूपे जगतां चेष्टाराहित्यसम्पादके १प्रलये २तस्य दिनरूपे जगतां चेष्टासम्पादके च कालभेदे । “यदा स देवो जागर्त्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति” मनुना जगच्चेष्टातद्राहित्ययोर्ब्रह्माहोरात्रयोरुक्तेस्तथात्वम् ।

कलिशब्दे दर्शितवाक्येन युगमानमुक्त्वा कल्पमानं प्रदर्श्य ब्रह्मणः आयुःपरिमाणं तस्य गतायुःकालश्च सू० सि० उक्तो यथा—

“युगानां सप्ततिः सैका मन्वन्तरमिहोच्यते । कृताब्दसङ्ख्यस्तस्यान्ते सन्धिः प्रोक्तो जलप्लवः” सू० । “युगानां सैका सप्ततिरेकसप्ततिर्महायुगमित्यर्थः । इह—मूर्त्तकाले । मन्वन्तरं मन्वारम्भतत्समाप्तिकालयोरन्तरकालमानमित्यर्थः । मूर्त्तकालमानभेदाभिज्ञैः कथ्यते । तस्य मनोरन्ते विरामे जाते सति कृताब्दसङ्ख्यः षड्गुणकृतयुगवर्षमितः सन्धिः कालविद्भिः प्रकर्षेण द्वितीयमन्वारम्भपर्य्यन्तं भूतभाविमन्वोरन्तिमादिसन्धिरूपैककालेन कथितः । तत्स्वरूपमाह “जलप्लव इति । जलपूर्णा सकला पृथ्वी तस्मिन् लोकसंहारकाले भवति । अथ कल्पप्रमाणं सविशेषमाह” रङ्ग० । “ससन्धयस्ते मनवः कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणः कल्पादौ सन्धिः पञ्चदशः स्मृतः” सू० । “ते एकसप्ततियुगरूपा मनवः स्वायम्भुवाद्याः ससन्धयः स्वसन्धिसहिताश्चतुर्दशसङ्ख्याकाः कल्पकाले ज्ञातव्याः । षट्सन्धियुक्तचतुर्दशमनुभिः कल्पः स्यादित्यर्थः । ननु पञ्चान्तरे कल्पमानं युगसहस्रं त्वया तु युगमानमेकसप्ततिगुणं मनुमानं ३०६७२०००० कृताब्द १७२८००० युक्तं सन्धिमनुमानं ३०८४४८००० इदं चतुर्दशगुणं ४३१८७२००० कल्पप्रमाणं तत्र कुतोन युगसहस्रमित्यत आह । कृतप्रमाण इति । कल्पादौ प्रथममन्वारम्भे कृतयुगवर्षमितो मनोश्चतुर्दशत्वेऽप्याद्यः पञ्चदशकः सन्धिः कालज्ञैरुक्तः । तथा च कृतवर्षान्तरं प्रथममन्वारम्भ इति तद्वर्षयोजनेनाविरोध इति भावः । अथ ब्रह्मणो दिनरात्र्योः प्रमाणमाह” रङ्ग० । “इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती” सू० । “इत्थं पूर्वोक्तप्रकारसिद्धेन युगसहस्रेण भूतसंहारकारको क्षयात्मकः कल्पकालो ब्राह्मं ब्रह्मणः सम्बन्ध्यहः दिनं कालज्ञैरुक्तम् । तस्य ब्रह्मणस्तावती दिनपरिमिता शर्वरी रात्रिः । कल्पद्वयं तदहोरात्रमिति फलितार्थः । अथ ब्रह्मण आयुःप्रमाणमतीतवयःप्रमाणं चाह” रङ्ग० । “परमायुः शतं तस्य तयाहोरात्रसङ्ख्यया । आयुषोऽर्द्धमितं तस्य शेषकल्पोऽयमादिमः” सू० । परमपरं शृणु पूर्वोक्तं त्वया श्रुतमपरं च वक्ष्यमाणं शृणु त्वम् । यद्वा परमेति दैत्यवरार्थकं सम्बोधनम् । त्वं तस्य ब्रह्मणस्तया पूर्वोक्तयाहोरात्रमित्या कल्पद्वयरूपया शतं शतवर्षपरिमितमायुः शरीरधारणकालं जानीहि । एतदुक्तं भवति । अहोरात्रमानात् पूर्वपरिभाषया (३०) मासमानं तस्मात् पूर्वोक्तपरिभाषया(१२)ब्रह्मणो वर्षमानमेतच्छतसङ्ख्यया ब्रह्मायुरिति । न तु यथाश्रुतार्थेन कल्पशतद्वयमायुः, कीटादीनामपि दिनसङ्ख्ययायुषोऽनुक्तेः सुतरां ब्रह्मणः शतदिनात्मकायुषोऽसम्भवात् “निजेनैव तु मानेन आयुर्वर्षशतं स्मृतम्” इति विष्णुपुराणोक्तेश्च । एतेन परमा—रित्येकं पदमिति निरस्तम् ब्रह्मणोऽनियतायुर्दायासम्भवात् । तस्य ब्रह्मण आयुः शतवर्षरूपमस्यार्द्धं पञ्चाशद्वर्षपरिमितमितं गतम् । अयं वर्त्तमान आदिमः प्रथमः शेषकल्पः शेषायुर्दायस्य ब्रह्मदिनस्य उत्तरार्द्धस्य प्रथमदिवसो वर्त्तमान इति फलितार्थः । अथ वर्त्तमानेऽस्मिन् दिवसेऽप्येतद्गतमित्याह” रङ्ग० । “कल्पादस्माच्च मनवः षड् व्यतीताः ससन्धयः । वैवस्वतस्य च मनोर्युगानां त्रिघनो गतः” सू० । “अस्माद्वर्त्तमानात् कल्पाद् ब्रह्मदिवसात् षट्सङ्ख्याका मनव एकसप्ततियुगरूपाः ससन्धयः सप्तभिः सन्धिभिः कृतयुगप्रमाणैः सहिता

व्यतीता गताः । चकारश्चाष्टयोऽर्द्धमितमिति प्रागुक्तेन समुच्चयार्थकः । वर्त्तमानस्य सप्तमस्य मनोर्वैवस्वताख्यस्य युगानां त्रिचतुष्टयाणां चन्नः स्थानत्रयस्थितसङ्ख्यानां घातः सप्तविंशतिसङ्ख्यात्मको गतः । सप्तविंशतियुगानि गतानीत्यर्थः । चः समुच्चये । अथ वर्त्तमानयुगस्यापि गतमेतदिति वदन्नभिमतकालेऽयतो वर्षगणः कार्य्य इत्याह” रङ्ग० ।“अष्टाविंशाद् युगादस्मादुयातमेतत् कृतं युगम् । अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डयेत्” सू० । “अष्टाविंशतितमादेतस्मान्महायुगादेतदल्पकालेन पूर्व्व-काले साम्प्रतं स्थितं कृतं युगं गतम् । अतः कृतयुगान्तानन्तरमभिमतकाले कालं वर्षात्मकं प्रसङ्ख्याय गणयित्वा सङ्ख्यां पञ्चस्थानस्थितां भिन्नामेकत्रैकस्थाने पिण्डयेत् सङ्कलनविषयां कुर्य्यात् । सर्व्वेषां गतानां योगं कुर्य्यादित्यर्थः” रङ्ग० !

माघस्य त्रिंशत्तिथ्यात्मकतया ब्रह्ममासस्य त्रिंशत्कल्पघटितत्वात् तेषां कल्पानां नामानि हेमा० दा० मात्स्ये चाह च

“कल्पानुकीर्त्तनं वक्ष्ये सर्व्वपापप्रणाशनम् । यस्यानुकीर्त्तनादेव वेदपुण्येन युज्यते । प्रथमः श्वेतकल्पस्तु द्वितीयो नीललोहितः । वामदेवस्तृतीयस्तु ततो रथन्तरोऽपरः । रौरवः पञ्चमः प्रोक्तः षष्ठः प्राण इति स्मृतः । सप्तमोऽथ बृहत्कल्पः कन्दर्पोऽष्टम उच्यते । सद्योऽथ नवमः प्रोक्त ईशानो दशमः स्मृतः । ध्यान एकादशः प्रोक्तः तथा सारस्वतोऽपरः । त्रयोदश उदानस्तु गारुडोऽथ चतुर्दशः। कौर्म्मः पञ्चदशो ज्ञेयः पौर्णमासी प्रजापतेः । षोडशो नारसिंहस्तु समानस्तु ततः परः । आग्नेयोऽष्टादशः प्रोक्तः सोमकल्पस्तथाऽपरः । मानवो विंशतिः प्रोक्तस्तत् पुमानिति चापरः। वैकुण्ठश्चापरस्तद्वल्लक्ष्मीकल्पस्तथा परः । चतुर्विंशस्तथा प्रोक्तः सावित्रीकल्पसंज्ञकः। पञ्चविंशतिमो घोरो वाराहस्तु ततोऽपरः । सप्तविंशोऽथ वैराजो गौरीकल्पस्तथाऽपरः । माहेश्वरस्ततः प्रोक्तो त्रिपुरो यत्र घातितः । पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणः स्मृता । इत्ययं ब्रह्मणो मासः सर्व्वपापप्रणाशनः । आदावेव हि माहात्म्यं यस्मिन् यस्य विधीयते । तस्य कल्पस्य तन्नाम विहितं ब्रह्मणा पुरा” । तदारम्भकालस्य ब्रह्मसिद्धान्ते उक्तः “चैत्रसितादेर्भानोर्दिनमासयुगकल्पाः । सृष्ट्यादौ लङ्कायामिह प्रवृत्ताः दिनैर्वृत्त !” चैत्रसितादेः चैत्रशुक्लप्रतिपदारभ्येत्यर्थः ।

ब्रह्मपु० “चैत्रे मासि जगत् ब्रह्मा ससर्ज्ज प्रथमेऽहनि । शुक्लपक्षे समग्रन्तु तदा सूर्य्योदये सति । प्रवर्त्तयामास तदा कालस्य गणनामपि” इति कालसामान्यगणनस्य तत्र आरम्भोक्तेः” एवं चैत्रशुक्लप्रतिपदि कल्पारम्भेऽपि “माघशुक्लतृतीयायां कृष्णायां फाल्गुनस्य च । पञ्चमी चैत्रमासस्य यथैवाद्या तथा परा । शुक्ला त्रयोदशी माघे कार्त्तिकस्य तु सप्तमी । नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् । कल्पानामाद्यो ह्येता दत्तस्याक्षयकारकाः” वाराहवाक्यानि यदि समूलानि तदा कल्पभेदादविरुद्धानि कल्पादित्वेन तत्तत्तिथिषु श्राद्धकर्त्तव्यतोपयोगिपारिभाषिकत्वपरतया वा समर्थनीयानि । अतएव सू० सि० सुरासुराणामन्योन्यमहोरात्रविपर्य्ययात् । यत् प्रोक्तं तद्भवेद्दिव्यं भानोर्भगणपूरणात् । मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् न तत्र । द्युनिशोर्भेदो ब्राह्मं कल्पः प्रकीर्त्तितः, इत्यादिना युगमन्वन्तरकल्पानां सौरत्वेनोक्तिः । सौरमाने च नियतयुगादिकालेषु अनियततिथिसम्भवेऽपि सर्व्वेषां कल्पानामादौ चैत्रसितादितिथिरेव नियता प्रागुक्तवचनप्रामाण्यात् । किन्तु प्रागुक्तमात्स्ये ब्राह्मकल्पानां चान्द्रत्वोक्तेः चान्द्रत्वमपि तेन तिथिभेदसम्भवः सू० सि० वाक्यं तु पक्षस्पष्टीकरणोपयोगीत्यविरोधः ।

अत्र तिथिहैधे युगादिवत् व्यवस्था । कृप-णिच्-भावे अच् । २रचने ३विकल्पे च इतिकर्त्तव्यतायुक्ते ४विधाने च ।“प्रभुः प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते” मनुः । कल्पोविधानमस्यात्र औचित्येन । ५उचिते त्रि० शास्त्रतः । कल्प्यतेऽनुष्ठीयतेऽनेन करणे अच् । ६वैदिकविधानज्ञापके शास्त्रभेदे स च आश्वलायनापस्तम्बबौधायनकात्यायनादिसूत्रात्मकः । तस्य यथोपयोगिता तथोक्तं सायणाचार्य्येण ऋग्वेदभाष्योपोद्घाते यथा—

“कल्पस्त्वाश्वलायनापस्तम्बबौधायनादिसूत्रं, कल्प्यते समर्थ्यते यागप्रयोगोऽनेनेति व्युत्पत्तेः । नन्वाश्वलायनः किंमन्त्रकाण्डमनुसृत्य प्रवृत्तः? किं वा ब्राह्मणमनुसृत्य ? नाद्यः “दर्शपूर्णमासौ तु पूर्वं व्याख्यास्याम” इत्येवं तेनोपक्रान्तत्वात् न ह्यग्निमीळे इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः “आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपन्ति दीक्षणीयायाम्” इत्येवं दीक्षणीयेष्टिब्राह्मणे प्रक्रान्तत्वात् । अत्रोच्यते—मन्त्रकाण्डोब्राह्मणगतादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण

ब्रह्मयज्ञश्चैवं विहितः "यत् स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञम्" इति सोऽयं ब्रह्मयज्ञजपोऽग्निमीळे इत्याम्नायक्रमेणैवानुष्ठेयः तथा "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचः स्तोमे पारिप्लवं शंसतीति" विधीयते तथा "आश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति" विधीयते तथा "रिच्यत इव वा एष प्रेव रिच्यते यो याजयति यो वा प्रतिगृह्णाति याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिःस्वाध्यायं वेदमधीयीतेति" प्रायश्चित्तरूपं वेदपारायणं विहितम् इत्यादिषु तत्तन्मन्त्रकाण्डविनियोगेषु संप्रदायपारम्पर्यागत एव क्रम आदरणीयः। विशेषविनियोगस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणान्युपजीव्याश्वलायनोदर्शयति अतोमन्त्रकाण्डक्रमाभावेऽपि न कश्चिद्विरोधः। इषे त्वेत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रान्ता तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वादाश्वलायनस्यादौ तद्व्याख्यानं युक्तम् अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति तर्हि "प्र वो वाजा"इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनोऽब्रवीत् "नमः प्रवक्त्र"इत्यादयस्त्वनाम्नाताः कुतो विनियुज्यन्ते? इति चेत् नायं दोषः शाखान्तरसमाम्नातानां ब्राह्मणान्तरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात् सर्वशाखाप्रत्ययमेकं कर्मेति न्यायविदः, तस्माच्छ्रुतेन कल्पोऽप्यपेक्षितः"। कात्या०व्या०कर्केण कल्पशास्त्रप्रयोजनमित्यं दर्शितं यथा— "इह पुण्यो वै पुण्येन कर्म्मणा भवति" "तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनेति" "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्यादिभिर्वाक्यैः कर्म्मणां स्वर्गापवर्गादिश्रेयःसाधनत्वं प्रतीयते। तानि चाग्निहोत्रादिकर्म्माणि वेदवाक्यैकवेद्यानि। वेदवाक्यानि चानेकशाखावस्थिततया स्वतश्च प्रतिवाक्यं नानाविधपरस्परविरुद्धार्थस्फुरणेन दुर्बोधार्थानि बहुभिरर्थवादवाक्यैर्मिश्रितानि च तथाहि "अग्निहोत्रं जुहुयात् स्वर्गकामः"इत्यत्र किं स्वर्गो होमाय,उत होमः स्वर्गाय, तथा अग्निहोत्रशब्दो गुणविधानार्थो नामधेयं वेति तथा "स वै संवत्सरं दीक्षाभिरेति"इत्यादौ कश्चित् संवत्सरशब्दस्य लक्षणार्थत्वम् अहस्संवत्सरादौ तस्यैव गौणत्वम्। अर्थवादादिभिश्च पाठात् विध्यर्थवादसंदेहोऽपि भवति किमयं विधिः? उतार्थवादः? इति यद्यपि जैमिनिशबरस्वामिकुमारिलभट्टप्रभृतिभिर्मीमांसायां तानि वाक्यानि संदेहनिरासपूर्ब्बकं यथार्थं व्याख्यातानि सन्ति। अधीतशाखायां च तदर्थावगमोऽपि सुकर एव, तथापि तेषां नानाशाखाव्यवस्थितत्वेनेदानीन्तनैः सर्वैः पुरुषैरध्येतुं ज्ञातुं वाऽशक्यत्वात्तदधीनं कर्म्मणां ज्ञानं दुःशकमिदानीन्तनानामिति मत्वा परमकारुणिको भगवान् कात्यायनाचार्य्यो नानाशाखागतविधिवाक्यसंग्रहरूपं कल्पसूत्रं प्रणीतवान्"। तत्र प्रतिपाद्यविषयाः कात्यायनशब्दे वक्ष्यन्ते

आर्षेयकल्पसूत्रविषयाश्च "अथार्षेयकल्पो व्याख्यातव्यः" इत्युपक्रम्य सर्वक्रतुप्रकृतिभूतस्य त्रिपर्वणोज्योतिष्टोमस्य सर्वाहर्गणप्रकृतिभूतस्य व्यूढस्य द्वादशाहस्य च ब्राह्मणवाक्यैनैव प्रयोगो दर्शितस्तदुपजीवनेन क्रत्वन्तराणि प्रयोक्तव्यानीति दर्शयितुमादौ ऋत्विग्वरणादिकमभिधाय १प्र० "कॢप्तो ज्योतिष्टोमोऽतिरात्रः षोड़शिक;" इत्यादिना सौभरसहंयीयमित्यन्तेन सामविशेषयुक्तस्य प्रायणीयस्य प्रयोगो दर्शितः। ततः "उपास्मै गायता नरः" इत्यादिना अभिप्लवस्य प्रथमाहस्य। "पवस्व वाचः" इत्यादिना द्वितीयाहस्य। "दविद्युतत्याऽ वा" इत्यादिना तृतीयाहस्य। "पवमानोऽजीजनत्" इत्यादिना चतुर्थाहस्य। "पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य। "असृत प्रवाजिनः" इत्यादिना षष्ठाहस्य। "पृष्ठ्यः षडहः समूढो वा व्यूढो वा" इत्यादिना पृष्ठ्यषडहस्य त्र्यहाणां प्रयोगः। एवम् चतुर्थस्याह्न इत्यादिना उत्तरत्र्यहकल्पः। २प्र० "पवस्व वाचो अग्रियः" इत्यादिना अभिजितोऽह्नः कल्पः। "उपास्मै गायता नरः" इत्यादिना स्वरसाम्नां प्रथमस्य। "पवस्व वाचोऽग्रियः" इत्यादिना तेषां द्वितीयस्य "दविद्युतत्या रुचा" इत्यादिना तृतीयस्य। "उपास्मै गायता नरः"इत्यादिना विषुवायमानामावृत्तानां स्वरसाम्नाम् कल्पः। "उप त्वा जामयः" इत्यादिना विश्वजितः। "पौरमीढं मानवं जनित्रम्" इत्यादिना आवृत्तयोः पृष्ठ्याभिप्लवयो:,। ज्योतिष्टोमसामेत्यादिना आयुष्टोमस्य। "पवस्व वाचोऽग्रियः" इत्यादिना गोष्टोमस्य। 'उपास्मै गायता नरः" इत्यादिना महाव्रतस्य। ३प्र० "कॢप्तो ज्योतिष्टोम." इत्यादिना गोः, आयुषः, अभिजितः विश्वजितश्च महाव्रतस्य। 'पवस्व वाचोऽग्रियः" इत्यादिना प्रथम-

स्याहस्य । "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना द्वितीयतृतीययोः । "उपास्मै गायता नरः" इति चतुर्थस्य । "उपास्मै गायता नरः" इत्यादिना प्रथमसाद्यस्क्रस्य । "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना साद्यस्कत्रिकस्य । "पवमानस्य जिघ्नते" इत्यादिना श्येनरूपसाद्यस्कस्य । "उपास्मै गायता नरः" इत्यादिना एकत्रिकसाद्यस्कस्य । ज्योतिष्टोमं बहिष्पवमानमित्यादिना प्रथमव्रात्यस्तोमस्य । "एते असृग्रमिन्दव" इत्यादिना द्वितीयतृतीयव्रात्यस्तोमयोः । "अपिबवती प्रतिपत्" इदित्यादिना चतुर्थव्रात्यस्तोमस्य । "अग्न ! आयूंषि पवस" इत्यादिना प्रथमस्याग्निष्टुतः । "एवैवोत्तरस्य क्लृप्तिः" इत्यादिना द्वितीयतृतीयचतुर्थानामग्निष्टुताम् प्रजापतेरपूर्व्वस्य इन्द्रस्तितस्य, इषुनामकयज्ञस्य च । "प्र सोमासो अधन्विषुः" इत्यादिना सर्व्वस्वारस्य ।

४प्र० । "अग्न ! आयूंषि पवसे" इत्यादिना वैश्वदेववारुणप्रघासिकैकाहस्य । "कया त्वं न ऊत्या पवस्व" इत्यादिना वारुणप्रघासिकद्वितीयाहस्य । "उप त्वा जामयोगिरः" इत्यादिना याकमेधप्रथमाहस्य । "इन्द्राग्नेन्द्रो ! मरुत्वते" इत्यादिना तदीयद्वितीयाहस्य । "विश्वकर्म्मन् हविषा" इत्यादिना तदीयतृतीयाहस्य शुनासीर्यस्य च । "पवस्वेन्द्रो ! वृषासुतः" इत्यादिना उपहवस्य । "द्वितीयस्य स्वरसाम्न" इत्यादिना ऋतपेयदूणाशवैश्यस्तोमतीव्रसुद्राजपेयेषु प्रत्यवरोहणीयाभ्यारोहणीययोः कल्पः । "वायोः शुक्रो अयामि त" इत्यादिना अभिषेचनीयस्य । "राजा मेधाभिरीयते" इत्यादिना दशपेयस्य । "केशवपनाय व्युष्टिद्विरात्र" इत्यादिना तदीयद्वितीयाहस्य । इत्थं चत्रस्य धृतेश्च । एतसुत्रक्रमेण सप्तसुत्यस्य वाजपेयस्य च ।

५प्र० "राजा मेधाभिरीयते" इत्यादिना राड्विराड़ोरुपसदाम् । "रौरवयौधाजये" इत्यादिना पुनस्तोमस्य चतुष्टोमस्य च । "उपोषु जात" इत्यादिना उद्भिद्बलभिदोरपचितेश्च । "साहस्रं बहिष्पवमानम्" इत्यादिना सर्व्वस्तोमोपचितेरग्नेः स्तोमयोश्च । "पुनानः सोम धारया" इत्यादिना ऋषभगोषवमरुत्स्तोमानामिन्द्राग्न्योः कुलायास्य । "इन्द्रायेन्द्रो ! मरुत्वत" इत्यादिना इन्द्रस्तोमस्य । "पवस्व वाचो अग्रिय" इत्यादिना इन्द्राग्न्योःस्तोमस्याद्यविघनस्य च । "पवस्व वाचो अग्रियः" इत्यादिना द्वितीयविघनस्य । "श्येनमाज्यबहिष्पवमा-

नम्" इत्यादिना एकाहसाध्यानां कल्पः । एते एकाहसाध्या इत्युक्तिश्च ।

६प्र० । "क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽपोर्ध्याम" इत्यादिना ज्योतिष्टोमातिरात्रस्य, आश्वीनिक्या रात्रेः, सर्व्वस्तोमाप्तोर्यामस्य, नवसप्तदशस्य, विषुवतः गोःआयुषः विश्वजिदभिजितोः एकस्तोमानाञ्च प्रथमाहस्य कल्पः "गोराज्यबहिष्पवमानम्" इत्यादिना, उक्तानां ज्योतिष्टोमातिरात्रादीनां द्वितीयतृतीयचतुर्थाहानाम् एकस्तोमानामाङ्गिरसचैत्ररथकापिवनरूपाणां द्विरात्राणां च कल्पः । "अभिप्लवस्य प्रथमस्याह्नः" इत्यादिना गर्गत्रिरात्रे प्रथमाहस्य । "उपोषु जातम्" इत्यादिना तत्र द्वितीयाहस्य । "पवस्व वाचः" इत्यादिना तत्र तृतीयाहस्य कल्पः । "पवस्व वाज सातये" इत्यादिना अश्वमेधत्रिरात्रस्य । "प्रसोमासो विपश्चित" इत्यादिना वैदत्रिरात्रस्य । "सांवत्सरिकस्य त्रिवृतः" इत्यादिना, छन्दोमपवमानत्रिरात्रस्य । ये गर्गत्रिरात्रस्येत्यादिना अन्तर्वसुपराकत्रिरात्रयोः कल्पः ।

७प्र० । "उपास्मै गायता नरः" इत्यादिना चतुरहप्रथमाहस्य । "पवस्व वाचो अग्रियः" इत्यादिना तदीयद्वितीयाहस्य । "दविद्युतत्यारुचा" इत्यादिना तृतीयाहस्य । "पवमानो अजीजनत्" इत्यादिना चतुर्थाहस्य । "उपोषु जातम्" इत्यादिना जामदग्न्यचतुरहस्य । "या जामदग्न्यस्य" इत्यादिना वाशिष्ठचतुरहस्य । प्रसोमासोविपश्चितः" इत्यादिना जाङ्कवचतुरहस्य । "वैश्वामित्रोद्व्यहः" इत्यादिना देवपञ्चरात्रस्य त्रयाणामह्नाम् । "पवमानो अजीजनत्" इत्यादिना तदीयचतुर्थाहस्य । "पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य कल्पः । "एष चतुरहोयोदेवानाम्" इत्यादिना पञ्चशारदीयव्रतमर्थ्योः । "पृष्ठ्यः षडहः समूढो व्यूढो वा" इत्यादिना ऋतुषडहायुष्कामपृष्ठ्यालम्बनानां षड़हानाम् । "एष एव षड़हो यः क्रतूनाम्" इत्यादिना सप्तर्षीणां प्रजापतेः छन्दोगानां जमदग्नेरिन्द्रस्य च पञ्चसप्तरात्राणाम् । "या देवानां पञ्चरात्रस्य" इत्यादिना जनकसप्तरात्रस्य । "एष एव षड़होयः क्रतूनाम्" इत्यादिना पृष्ठ्यस्तोमस्य सप्तरात्रस्य अष्टरात्रनवरात्रयोश्च कल्पः ।

८प्र० । "अग्न आयूंषि पवस" इत्यादिना त्रिककुब्दशरात्रस्य द्वयोरह्नोः । "दविद्युतत्यारुचा" इत्यादिना तदीयतृतीयाहस्य । "पवमानो अजीजनत्" इत्या-

दिना चतुर्थाहस्य ।"पवमानस्य विश्ववित्" इत्यादिना पञ्चमाहस्य ।"असृक्षत प्रवाजिनम्" इत्यादिना षष्ठाहस्य । "ये सोमासः परावति" इत्यादिना सप्तमाहस्य।"पवमाना असृक्षत"इत्यादिना अष्टमाहस्य ।"उपोषु जातम्" इत्यादिना नवमाहस्य विश्वजिदतिरात्रस्य च कल्पः।"या इक्ष्वाकुतिथस्य सा कुसुरुविन्दस्य"इत्यादिना कुसुरुविन्दुदशरात्रस्य ।"छन्दोमवत्यस्य पञ्चाहः" इत्यादिना छन्दोमदशरात्रस्य । "त्रिष्टोमोऽग्निष्टोमोयत्"इत्यादिना देवपूर्दशरात्रस्य पुण्डरीकैकादशरात्रस्य च कल्पः । इत्येते अहर्गणसाध्यत्वात् अहीना इत्युच्यन्ते इत्युक्तिश्च ।

८प्र०।"द्वादशरात्रस्य षोड़शिमन्त्यावतिरात्रौ"इत्यादिना त्रयोदशरात्रयोर्द्वयोः, तृतीयषड्विंशतिरात्रस्य, चतुर्दशरात्राणां त्रयाणां, पञ्चदशरात्राणां चतसृणाम्, षोड़शरात्रस्यैकस्य च कल्पः । एते सत्रसंज्ञा इत्युक्तिश्च ।"सप्तदशरात्रे चत्वार्य्यभिप्लवकान्यहानि" इत्यादिना सप्तदशरात्रस्य, अष्टादशरात्रस्य,एकोनविंशरात्रस्य च ।"विंशतिरात्रे सांवत्सरिकौ विश्वजिदभिजितौ"इत्यादिना विंशतिरात्रस्य । एकविंशतिरात्रयोर्द्वयोः, त्रयोविंशतिरात्रस्य, चतुर्विंशतिरात्रस्यास्विष्टव्यतिरात्रयोश्च कल्पः । "पवस्वेन्दो ! वृषा सुतः" इत्यादिना त्रयोविंशतिरात्रस्य। "उपास्मै गायता नर" इत्यादिना तदीयप्रथमविंशात्रस्य । "एष उस्यवृषा रथम्"इत्यादिना तदीयद्वितीयप्रभृतिविंशात्रस्य, चतुर्विंशतिरात्रस्य च कल्पः। तत्रैकोत्तरवृद्धास्त्रष्टौ इत्युक्तिश्च।"नानाब्रह्मसाम्नामतिरात्रः" इत्यादिना नानाब्रह्मसामादीनां त्रयाणां त्रयस्त्रिंशद्रात्राणाञ्च तत्र च एकोत्तरवृद्धानि सप्तेत्युक्तिश्च । "विष्टतीनां ज्योतिष्टोमोऽतिरात्रोऽषोड़शिकः"इत्यादिना विधृतीनाम् ।"पृष्ठ्यः षडहः समूढोत्रा"इत्यादिना, च विधृतीनाम् ।"शतातिरात्राश्च गाष्टोमस्य" इत्यादिना शतातिरात्रप्रभृतीनां षसाम्, एकपञ्चाशद्रात्रस्य, एकषष्टिरात्रस्य, शतरात्रस्य सांवत्सरिकस्य गवामयनस्य च कल्पः । '

१०प्र० "मध्ये पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना मध्ये पृष्ठ्यस्य, क्लृप्तानां व्यूढाग्निष्टोमेष्व आद्वितीयादह्नः कल्पः। "द्वितीयस्याह्न"इत्यादिना तत्रैव द्वितीयाहादि पञ्चानामह्नाम् ।"सप्तमस्याह्नः"इत्यादिना सप्तमप्रभृतीनां त्रयाणामह्नाम् ।"दशमस्याह्नः पञ्चानाम्"इत्यादिना दशमाहप्रभृतिक्लृप्तस्याच्छन्दोमदशाहस्य अर्हगणस्य ।"अस्य प्रत्ना मनुद्युतम्" इत्यादिना छन्दोमदशाहप्रथमाहस्य। "पवस्व वाचो अग्रियः" इत्यादिना छन्दोमद्वितीयाहस्य । "दविद्युततयारुचा" इत्यादिना छन्दोमतृतीयाहस्य । "पवमानो अजीजनत्" इत्यादिना छन्दोमचतुर्थाहस्य । "उत शुष्मासः" इत्यादिना तदीयपञ्चमषष्ठयोरह्नोः । "ये सोमासः परावति" इत्यादिना तत्र सप्तमाहस्य । "हिन्वन्ति सूरमुस्रयः" इत्यादिना तत्र अष्टमाहस्य । "उपोषु जातम्" इत्यादिना नवमदशमयोरह्नोः कल्पः।

११प्र०"पुरस्तात् पृष्ठ्यस्य क्लृप्तोऽतिरात्रः" इत्यादिना पुरस्तात् पृष्ठ्यस्य, त्रिरात्राभिप्लवस्य, गोः,आयुषश्च कल्पः।"अस्य प्रत्नामनुद्युतम्"इत्यादिना द्वितीये छन्दोमे प्रथमाहस्य । "पवस्व वाचो अग्रियः"इत्यादिना तत्र द्वितीयाहस्य । "दविद्युततयारुचा" इत्यादिना तत्र तृतीयाहस्य। "अथवे नु स्वतवसे" इत्यादिना तत्र चतुर्थपञ्चमयोः षष्ठस्य च । "ये सोमासः परावति"इत्यादिना सप्तमादिदशमान्तानां, महाव्रतस्यातिरात्रस्य च कल्पः । "विधृतिभिः क्लृप्तम्" इत्यादिना दृतिकुण्डपायिनामयनानां, द्वादशसंवत्सरस्य, षड्विंशतिसंवत्सरस्य, शतसंवत्सरस्य, अग्नेः सहस्रसाध्यायनस्य च । "प्रथमस्य सारस्वतस्य षोड़शिमन्तावतिरात्रौ" इत्यादिना त्रयाणां सारस्वतीनां, दार्षद्वतैरयोः, सर्पसत्रातिरात्रयोः दशि प्रथमस्य च कल्पः । "पवस्व वाचो अग्रियः"इत्यादिना दशि द्वितीयस्य,तत्र उत्तरपक्षमासे विपर्य्यासस्य च कल्पः। इत्येवं यागविशेषे दिनभेदे सूक्तपाठादिप्रयोगो दर्शितः। अन्येषु आश्वलायनसूत्रादिरूपेषु तेषु प्रतिपाद्यविषयाश्च तत्तच्छब्दे द्रष्टव्याः । कल्पग्रन्थश्च वेदाङ्गभेदः तन्मूलमङ्गशब्दे ७२पृ० शिक्षादिवाक्यमुक्तम् तत्र "हस्तौ कल्पो ऽथ पठ्यते" इत्यत्र वैदिककर्म्मणां विधानस्थानस्य कल्पग्रन्थाधीनत्वात् कर्म्मसाधनत्वेन हस्तसादृश्यादुक्तता । पितृकल्पः श्राद्धकल्पः पशुकल्पइत्यादि "कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्"रघुः । अनुष्ठाने । "वैश्यश्चौषकल्पश्च"मनुः । सपूर्वपदः कल्पप्रत्ययनिष्पन्नस्तु ईषदसमाप्तप्रकृतार्थे । "एते प्रदीपकल्पाः परस्परविलक्षणगुणविशेषाः" सां० का० । "कार्य्यं त्वया नः प्रतिपन्नकल्पम्" कुमा० । "श्राद्धकल्पात्मकश्च यजुर्वेदपरिशिष्टभागः यजुर्वेदशब्दे विवृतिः । अथर्ववेदस्यांशभेदरूपकल्पस्तु पञ्चविधः । "नक्षत्रकल्पोवेदानां संहितानां तथैव च । चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः" विष्णुपु० । हेमा० दा०देवीपुराणे च "पञ्च कल्पा भवन्ति नक्षत्रकल्पो

वैतानः संहिताविधिराङ्गिरसः शान्तिकल्पश्च आथर्वणः" इति ।

कल्पक त्रि० कल्पयति रचयति आरोपयति वा क्लृप–णिच्–ण्वुल् । १रचके २आरोपके च । ३कर्चूरे(कचूर) भावप्र० ४नापिते पु० शब्दमाला तस्य केशवेशरचकत्वात् तच्छेदकत्वात् वा तथात्वम् । कल्प+स्वार्थे कन् । ५कल्पशब्दार्थे च

कल्पकारः पु० कल्पं कल्पसूत्रं करोति कृ–अण् । १कल्पसूत्रकारकेषु आश्वलायनादिषु कल्पं वेशं करोति अण् । २वेशादिकारके त्रि० ३नापिते पु० ण्वुल् । कल्पकारकोऽप्यत्र

कल्पक्षय पु० कल्पस्य सृष्टेः रचनाविशेषस्य क्षयोऽत्र । प्रलये । "पुरा कल्पक्षये वृत्ते जातं जलमयं जगत्" वृहत्कथा । "कल्पक्षये पुनस्ते तु प्रविशन्ति परं पदम्" विष्णुपुरा० ।

कल्पतरु पु० कर्म्म० राजशिरोवत् त० वा । १देवतरुभेदे कल्पपादपशब्दे विवृतिः । "आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि" "मेरौ कल्पतरोरिव" रघुः । "निगमकल्पतरोर्गलितं फलम्" भाग० १,१,२ । २स्मृतिनिबन्धनभेदे शारीरकसूत्रभाष्यटीकाभामतीव्याख्यानरूपे ३ग्रन्थे च

कल्पद्रुम पु० कर्म्म० राजशिरोवत् त० वा । देवतरुभेदे । स कल्पविषयफलदातृत्वात् तस्य कल्पद्रुमत्वम् "अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः" कुमा० । "नावैमि कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम्" रघुः । "कल्पद्रुमैरिव विचित्रफलैर्विरेजुः" माघः । कल्पद्रुकल्पवृक्षादयोऽप्यत्र ।

कल्पन न० कृप–छेदने भावे ल्युट् । १छेदने त्रिका० । क्लृप–सामर्थ्ये णिच्–भावे ल्युट् । २रचनायाम् ३विधाने ४आरोपे च ।

कल्पना स्त्री क्लृप–णिच्–भावे युच् । १रचनायाम् "उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना" मनुः "प्रबन्धकल्पना कथा" अम० २विधाने ३आरोहणाय गजसज्जाकरणे हेम० "सकल्पनं द्विरदगणं वरूथिनः" माघः ४व्यतिरेकव्याप्तिज्ञानाधीने अनुमानभेदे नैया० ५अर्थापत्तिरूपे प्रमाणान्तरे मीमांसकवेदान्तिनयाज्ञः । आरोपश्चाविद्यमानपदार्थस्य अन्यत्र स्थितस्य अन्यत्र प्रतिभासरूपः मानसव्यापारः । "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्" सर्वद०स० । यथा रज्जौ सर्पकल्पना । वेदान्तिमते एवं प्रपञ्चस्य ब्रह्मणि कल्पनारूप आरोपः । "चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना" । निराकारस्य साकारतया जगदाकारेणारोपोऽपि कल्पनैव स चाध्यासशब्दे उक्तः । तदेतत् मुक्ताफले तट्टीकायां च निर्णीतं यथा—

"अहमेवासमेवाग्रे नान्यद्यत् सदसत् परम् । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम्" मुक्ताफ० । "अहमेवेति कर्त्रन्तरस्य व्यावृत्तिः आसमेवेति क्रियान्तरस्य । अग्रे मायासम्बन्धादहमेव त्रिधा विभक्त इत्यर्थः, पश्चात् मायावियोगादनन्तरमप्यहमेव प्रपञ्चस्यादिमध्यावसानेष्वहमित्यर्थः । यच्चैतत् प्रपञ्चरूपं तदप्यहं नान्यत् सिद्धं मय्यारोपितं यथाऽन्यत्र सिद्धः सर्पो रज्जौ एवं विवेचनात् भ्रमे निवृत्ते योऽवशिष्येत सोऽहमस्मि इदन्तया स्वरूपस्य निर्देष्टुमशक्यत्वादेवमुच्यते । एतेन यथा कटकादिष्ववस्थात्रयेऽपि सुवर्णत्वमेव सत्यम् । तथा जगदादिमध्यान्तेष्वनुस्यूतं सत्तामात्रं भगवत्स्वरूपमिति श्लोकार्थ इत्युक्तं, न तावदस्यासम्भवः "सदेव सोम्येदम्" इत्यादिश्रुतिसिद्धत्वात् । न च काशाकाशादिष्वतिव्याप्तिः तदुत्पत्तेः श्रुतत्वात् विमतमनित्यं बाध्यत्वात् शुक्तिरूप्यवदित्यनुमानाच्च । नापि साकारेषु चतुर्ष्वव्याप्तिः तेषामाकारतिरोहितत्वात् तस्मान्निर्दोषं लक्षणम् । एवं सामान्यलक्षणमुक्त्वा विशेषाल्लक्षयितुमाह" टी० "स द्वेधा निराकारः साकारश्च अनवच्छिन्नं चैतन्यं निराकारः सत्त्वावच्छिन्नं चैतन्यं साकारः । स चतुर्धा रजस्तमोभ्यां युक्ते सत्त्वे पुरुषः१ रजसा ब्रह्मा२ तमसा रुद्रः३ शुद्धे विष्णुरेव४" मुक्ता० । "स द्वेधेति द्वैधात्म्यमेवाह निरेति अनवच्छिन्ने वस्तुन्यवच्छेदक उपाधिराकारः तेन रहितो निराकारः तत्सहितोऽन्यः । तत्राद्यं लक्षयति अनवच्छिन्नमिति । द्वितीयं लक्षयति, सत्त्वेति । अस्यैव भेदानाह स चेति सः साकारः । तदाद्यं भेदमाह रजस्तमोभ्यामिति । तुल्याभ्यां रजस्तमोभ्यां युक्ते सत्त्वे प्रतिफलितं चैतन्यं पुरुषशब्दार्थ इति पूरणीयम् । एवमुत्तरत्र रजस्तमोभ्यामिति तृतीयया तयोरप्राधान्यं "सहयुक्ते चाप्रधाने" (पा०) इति स्मरणात् तेन पुरुषे सत्त्वं बहुलं, रजस्तमश्च तदपेक्षया न्यूनमित्यर्थः । न तु तेषां समान्येव त्रिसाम्यस्य प्रकृतिलक्षणत्वात्, न्यूनाधिकभावश्चैषां कार्य्यगम्यो न तु मानादिमूर्त्तद्रव्यवत् प्रत्यक्षः । युक्तपदं द्वयोर्वर्त्तते, सत्त्वपदं त्रिषु । द्वितीयं भेदमाह रजसेति । रजसा युक्ते सत्त्वे

ब्रह्मा। अत्र च मायया विद्यमानमपि तमो रजसः प्राधान्यं वक्तुं गौणम् नतु तस्याभ्येव तत्कार्य्यलोपलम्भात् हतोया तु प्राग्वत् तेन ब्रह्मापि तमस्योक्त तदपेक्षया रजः प्रभूतमित्यर्थः। रजसः प्रागुक्तिः सत्वापेक्षया श्रेयस्त्वात् सृष्टेकरत्वानुरोधाच्च हतीयं भेदमाह तमसेति। अत्र रजोमात्रानुरोधादिकं प्राग्वत्। चतुर्थमाह शुद्धे विष्णुदेवेति शुद्धे रजस्तमोभ्यामस्पृष्टे सत्वे विष्णुरेव विष्णुसंज्ञैव क्रियते न तु नतावन्तरत्वस्यान्तरमित्येवमस्त्यर्थः। तथाहि "तमेनं विशुद्धोर्जितसत्वाकारं सदा यत्र इत्याचक्षते शैवाः। पशुपतिरिति पाशुपताः। पुरुषोत्तम इति पाञ्चरात्राः। आदिविद्वान् सिद्ध इति कापिलाः। ईश्वर इति यात ञ्जलाः। इह तु तस्य विष्णुसंज्ञैव। यद्वा विष्णुं पञ्चात्मक मित्यत्र पञ्चानामपि विष्णुसंज्ञामुक्त्वा चतुर्थी संज्ञान्तरमप्युक्तम्। शुद्धसत्वोपाधिस्तु विष्णुसंज्ञ एवेत्येवमस्त्यर्थः। ते च ब्रह्मविष्णुरुद्राः प्रत्येकम् आधिदैविकादिभेदात् त्रेधा विष्णुदेवे" टी० "अगोचरस्य गोचरत्वे हेतुः प्रकृतिगुणः सत्वम्, गोचरस्य बहुरूपत्वे रजः,बहुरूपस्य तिरोहितत्वे तमः। तथा परस्परमुदासीनत्वे सत्वम्" मुक्ता०। "एवमुपाधिसंभेदात् पञ्चरूपतामुक्त्वा इदानीमननुसंहितोपाधेरुपहितप्रत्ययायोगादुपाधीन् लक्षयति अगोचरस्येति। अगोचरस्य अविषयभूतस्य वस्तुनोगोचरत्वे विषयीभावे हेतुर्यः प्रकृतिगुणः तत् सत्वमित्यर्थः। हेतुः प्रकृतिगुणइत्युत्तरत्र पञ्चस्वनुवर्त्तते। गोचरस्य सतो यत्सत्वम्भावानाम्यं तद्रजः। तस्यैव तिरोहितत्वे कारणात्मनावस्थाने हेतुस्तमः इत्यर्थः। विभागे इत्यनुक्त्वा सत्कार्य्यपक्षाश्रयणात्तिरोहितत्वे इत्युक्तम्। एवमाधिदैविकोपाधिस्वरूपमुक्त्वा आध्यात्मिकोपाधिस्वरूपमाह तथेति। अयमर्थः परस्परमुदासीनमित्यत्रहिपत्तत् उदासीनत्वे हेतुः सत्वम् इति" टी० "गोचरत्वे सत्वम्, उपकारित्वे रजः, अपकारित्वे तमः। गोचरत्वादीनि, स्थितिसृष्टिसंहाराः" मुक्ता०। "आधिदैविकाध्यात्मिकोपाधिलक्षणादाधिभूतोपाधिस्वरूपमपि ऊहितं येन हि एकस्मिन् वस्तुनि द्विरूपोविच्छेदः आधाधिभौतिकः तदुक्तम् "योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः। य स्तत्रोभयविच्छेदः स स्मृतोह्याधिभौतिकः"। उक्तान् गोचरत्वादीन् उपाधीननुशीलयितुमाह गोचरत्वादीनीति। गोचरत्वबहुरूपत्वतिरोहितत्वानि क्रमात् स्थित्यादिशब्दै रुच्यन्त इत्यर्थः। न चैवं सृष्टेरनन्तरमस्थितिरिति विरु-

द्धत्वं मन्तुं स्थितिपूर्वकत्वात् सृष्टेः। स्थित्या हि सदादयोघटाद्यात्मना सृज्यन्ते नास्थिता इति अतएवोक्तं "सत्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः। सर्गाय रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये" इति टी० "उदासीनत्वादीनि च" मुक्ता०। "एवमाध्यात्मिकेष्वपीत्याह उदासीनेति। अयमर्थः यदिदं चैत्रादेरुपकारापकारवैधुर्य्येणावस्थानं सा स्थितिः। उपकारकत्वेन सृष्टिः। अपकारकत्वेन तु संहारः। ततश्च जगत्स्थित्यादिहेतव आधिदैविकाः, अन्ये त्वाध्यात्मिकाः। सुरनरादयः अवतारास्तु सर्वे विना कृष्णम्, स तु पुरुषः त्रिविक्रमावतारत्वात् यथोक्तम् "तयोर्वां पुनरेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः" (भाग०) इति। अत एव तत्र तत्र विश्वरूपप्रकटनं पूर्व्वावतारदेशवत्सत्यस्य। दृश्यते चाद्यापि कृष्णस्वर्णमूर्त्तौ त्रैविक्रमचिह्नं कृष्णव्यपदेशश्च। अतएव प्रह्लादसंहितायां द्वारकामाहात्म्ये हतीये अध्याये वैकुण्ठमलङ्करिष्यता भगवता सकलं निजं तेजस्तस्यां मूर्त्तौ विन्यस्तमिति दर्शितम्। तथा हि "यत्र त्रैविक्रमी मूर्त्तिर्वर्त्तते यत्र गोमती। मरा मुक्तिं प्रयास्यन्ति पञ्चतीर्थेन भंगताः। कलेवरं परित्यक्तं प्रभासे हरिणा सदा। कलाभिः सहितं तेजस्तस्यां मूर्त्तौ निवेशितम्। तस्मात् कलियुगे विप्रा! नान्यत्र प्राप्यते हरिः। यदि कार्य्यं हि कृष्णेन तत्र गच्छत मा चिरम्" इति। तथा "आदौ त्रिविक्रम इति ख्यातिरासीन्महीतले। कृष्णस्य तु कलान्यासात् कृष्ण इत्यभिधीयते" इति। यत् सत्वं विशुद्धमित्यादिना शुद्धसत्वतासंकीर्त्तनं तत् साम्प्रतमस्वविषयं, न तु यथाश्रुतमेव गुणान्तरकार्य्यस्याप्युपलम्भात् तत्र तदसत्त्वमन्यत्र तु वास्तवमिति तु भक्तिमात्रं तस्मात् पुरुष एवायमिति सन्तोष्टव्यं निपुणैष्टव्यं चेदमुपरिष्टात्। यथा चैता ब्रह्मादिमूर्त्तयोगुणमूलाः तथा चाह्लादयोरप्यत्र तन्मूला एवेत्युपरिष्टात् प्रवेदयिष्यामः। किं बहुना तन्निरयतारतम्यवैचित्र्याक्रान्तमिदं विश्वं तदुक्तं "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैरिति" टी० "तेषु विष्णुब्रह्मरुद्रा निमित्तं पुरुष उपादानं गोचरत्वे तु चैतन्यम्, एव पञ्च भेदाः तत्र निराकारः" मुक्ता०। एवमुपाधिस्वरूपं निर्धार्य्योपहितेषु संख्याविशेषस्योपयोगमाह तेष्विति" तेषु स्थितिसृष्टिसंहारेषु विष्णु-

दयः क्रमात् निमित्तम् कुलाल इव घटस्य, पृथ्व उपादानं समवायिकारणं घटस्येव मृत्, दृष्टा च कारणद्वयपूर्व्विका कार्य्यप्रवृत्तिः असमवायिकारणं तु निमित्तान्तर्गतमेवेति पृथङ्नोक्तम्। अतएव "अन्वयादितरतश्चेति" भाग॰प्रथमश्लोके द्वयमेवोपात्तम्। गोचरत्वे प्रतीतिविषयत्वे तु निर्व्विशेषचैतन्यं हेतुः "तस्य भासा सर्व्वमिदं विभातीति" श्रुतेः। तत्र स्थित्यादिनिमित्तार्थं त्रयः, उपादानार्थं चैकः गोचरत्वार्थमन्यश्चेति "विष्णुं पञ्चात्मकम्" इत्यत्र पञ्चैवोक्ता न न्यूनाधिका इत्यभिप्रेत्याह एवं मतेति। ननु चैवमेकः सामान्यात्मा विशेषरूपाश्च पञ्चेति षट्कमाशङ्क्य विशेषपरिहारे सामान्यस्यानवस्थानात् एवं तावत् पञ्च वस्तूनि स्वयं वर्णयित्वा तदेव ग्रन्थान्तरानुरूपेण लक्षणेन द्रढयतुमाह तत्रेति। निराकार इति निराकारस्य लक्षणं कथयतु इत्यर्थः" टी॰। "न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे। न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम्। परं पदं वैष्णवमामनन्ति तत् यत्र नेतीत्यतदुत्सिसृक्षवः। विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यार्हपदं पदे पदे" (भाग॰)मुक्ता॰। "तत्रापि न यत्रेति तटस्थस्य, परं पदमिति स्वरूपस्य। तत् परं पदं वैष्णवम् आमनन्ति विष्णुनाधिष्ठितं अधिष्ठिताधिष्ठितेन राज्ञाधिष्ठितवत् ब्रह्मादिपदानामपि विष्णुनाऽधिष्ठितत्वात् परमित्युक्तं विष्णुनैवाधिष्ठितमित्यर्थः। यत्र पदे कालो नास्ति यः अनिमिषां ब्रह्मादीनां परः प्रभुः संहर्त्ता महाप्रलयेऽपि नाशो नास्त्येवेत्यर्थः। अतएव कालाभावे किंपुनर्न्यायेन देवा अपि तत्र न सन्तीत्याह कुतोन्विति। तथा देवाभावे जीवा अपि न सन्तीत्याह जगतामिति। ये देवा जगताम् उच्चावचां गतिं गच्छतां जीवानामीशाः तेषां का वार्त्ता? तत्क्षतविभ्रमगन्धोऽपि नास्तीत्याह ईशिरे इत्यनित्यत्वद्योतनार्थं लिट्प्रयोगः। यत्र च पदे सत्त्वादिर्नास्ति सत्त्वमिन्द्रियदेवतारूपं, रज इन्द्रियम्,। तम इन्द्रियार्थरूपं, विकारोऽहङ्कारस्तेषां त्रयाणां कारणं महान् बुद्धितत्त्वं तदहङ्कारस्य प्रधानमव्यक्तं तन्महतः। सत्त्वाद्यभावादेतत् प्राप्नुवतां पुनर्जन्मादिशङ्काबीजलेशोऽपि नास्तीत्यर्थः। एवं दुःखं नास्तीत्युक्त्वा सुखमस्तीत्याह यत्रेतीति। यत् विष्णुपदं हृदा मनसा उपगुह्य श्लिष्य अनन्यसौहृदाभवन्ति अन्यत्र विषये प्रीतिं परित्यजन्ति तादृक्सुखाभावात् तद्धि पदे पदे क्षणे क्षणे अर्हपदं अर्हणस्य आदरस्य स्थानम् उत्तरोत्तरचमत्कारणीयत्वात् दौरात्म्यं विसृज्य अनादिदुर्वासनावासितत्वं त्यक्त्वा विषयान्तरस्फूर्तिरपि नास्तीत्यर्थः नेति नेतीत्युपनिषदुपदेशविश्वासबलात् अतत् विष्णुपदादन्यत् उत्सिसृक्षवः स्वेच्छयैवोत्स्रष्टवन्तः। नित्यनिरतिशयसुखानुभवरूपे विष्णुपदे अनुभविता अनुभवनं अनुभवनीय इति कर्त्तृकरणकर्म्माणि अतच्छब्देनोच्यन्ते तानि ह्यनुभवार्थमुपादीयन्ते सत्यनुभवे तु त्यज्यन्ते असत्यत्वादन्तरायत्वाच्च" टी॰ "इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्य्यसुरन्धिताशयः"। पुरुषः—"भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन्। स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः" (भाग॰)मुक्ता॰। "एवमस्य द्विविधलक्षणमुक्त्वा अत्राधिकारिणमाह इत्थमिति। इत्थं व्यवस्थितः अनेन प्रकारेण विशिष्टामवस्थामापन्नो मुनिरुपरमेत् न किञ्चित् कुर्य्यात् यतो विज्ञानस्य विशुद्धज्ञानरूपस्य विष्णोर्दृक् दर्शनं साक्षात्कारः तस्य वीर्य्यं बलं तेन सुरन्धितो यथा पुनर्नोदेति तथा हिंसितः आशयो जीवत्वोपाधिर्य्येन स तथा। अयमर्थः वक्ष्यमाणभूमिकोपासनाक्रमबलात् सत्यपुरुषान्यताख्यातिमापन्नस्तामपि सायुज्यार्थी निरोद्धुकाम इत्येतामवस्थामापन्नो मुनिरत्राधिक्रियते नान्यः। अवश्यञ्चाधिकारिनिर्धारार्थं इत्थमित्यादि श्लोकम् अन्यथास्योद्धरणं निःप्रयोजनं स्यात्। इति शुकः राजानं प्रति पुरुषलक्षणमाह। भूतैरित्यादि। आत्मसृष्टैः आत्मना प्रकृतिमधिष्ठाय सृष्टैः पुरं देहं विराजं ब्रह्माण्डं विरचय्य निष्पाद्य तस्मिन् स्वांशेन जीवकलया यदा प्रविष्टः तदा पुरुषसंज्ञामवाप पुरि शयनाद्वसनाद्वा पुरुषः अंशेऽप्यंशोक्तिः कल्पनया। नारायणः जलशायी आदिदेवो निराकारः" टी॰। मुक्ताफलस्थाः श्लोकास्तु भागवतीयाः।

कल्पनाकाल त्रि॰ कल्पनायाः कालः कालो यस्य। संकल्पवदाशुविनाशिनि अस्थिरे पदार्थे त्रि॰।

कल्पनी स्त्री कृप—छेदने करणे ल्युट् ङीप्। कर्त्तर्य्याम्। (कांचि) हेमच॰।

कल्पपादप पु॰ कर्म्म॰ राजशिरोवत् त॰स॰ वा। १सुरतरुभेदे "स्पृहा न चक्रेऽर्पितकल्पपादपः" नैष॰। महादानान्तर्गते स्वर्णनिर्म्मितपादपाकारे देये २द्रव्यभेदे तद्विधानं हेमा॰ दा॰ उक्तं यथा—

"मत्स्य उवाच। "कल्पपादपदानाख्यमतः परमनुत्तमम्। महादानं प्रवक्ष्यामि सर्व्वपातकनाशनम्। पुण्यं दिन-

यथाशाद्य तुलापुरुषदानवत् । पुण्याहवाचनं कुर्य्याद्धोमैश्चावाहनं तथा । ऋत्विग्वरणं पञ्चभारभूषणाच्छादनादिकम्" । आदिशब्देन काम्यदेवपूजाविग्रहादि-पूजागुरु ऋत्विक्चतुष्टयवरण-मधुपर्क-दान-होम-वेदिकोपरिचक्र-वेष्टनपञ्चवर्ण-वितानपताकातोरणादि, मत्स्यपुराणोक्ततुलापुरुषदानवद्वेदितव्यम् । "काञ्चनान् कारयेद्वृक्षान् नानाफलसमन्वितान् । नानाविहारवस्त्राणि भूषणानि च कारयेत्" । नानाफलेति, पुंस्त्रीगो-गज-वाजि-मणि-वस्त्र-कनक-रजत-भक्ष्यफलादीनि । "यथाशक्त्या पलादूर्द्ध्वमासहस्रात् प्रकल्पयेत् । अर्द्धात् कृष्णसुवर्णस्य कारयेत् कल्पपादपम् । गुडप्रस्थोपरिष्टाच्च सितवस्त्रयुगावृतम् । कामदेवमधस्ताच्च सकलत्रं प्रकल्पयेत्" । अर्द्धात् कृष्णसुवर्णस्येति, यथाशक्ति दानार्थकृष्णसुवर्णस्यार्द्धेन ब्रह्मादिप्रतिमासहितं कल्पपादपं कुर्य्यात् द्वितीयमर्द्धं चतुर्द्धा विभज्य एकैकांशेन चतुर्भागस्थदेवतासहितान् सन्तानादीन् विदध्यात्, गुडप्रस्थोऽत्र "द्वात्रिंशत्पलिकः प्रस्थः पुराणे परिकीर्त्तित" इति । ब्रह्मादिलक्षणमुक्तं ब्रह्माण्डदाने, कामदेवरूपन्तु विष्णुधर्मोत्तरात् "कामदेवस्तु कर्त्तव्यो रूपेणाप्रतिमो भुवि । अष्टबाहुः प्रकर्त्तव्यः शङ्खपद्मविभूषणः । चापबाणकरश्चैव मदाकुञ्चितलोचनः । रतिः प्रीतिस्तथा शक्तिर्भार्य्याश्चैतास्तथोज्ज्वला । चतस्रस्तस्य कर्त्तव्याः पत्न्यो रूपमनोहराः । चत्वारश्च करास्तस्य कार्य्या भार्य्यास्तनोपगाः । केतुश्च मकरः कार्य्यः पञ्चबाणमुखो महानिति" । अधस्तादिति ब्रह्मादिभिरपि सम्बध्यते । अत्र प्रकृतौ परिमाणाभावात् पुरुषेच्छया प्रतिमादिपरिमाणनियमः । "सन्तानं पूर्व्वतस्तद्वत् तुरीयांशेन कल्पयेत्" तुरीयांशेन द्वितीयार्द्धचतुर्थांशेनेत्यर्थः । तद्वत् कल्पतरुवत्, पञ्चभारं गुडप्रस्थोपरिगतं ब्रह्मादिप्रतिमान्वितं कुर्य्यादित्यर्थः । केचित्तु कामदेवमधस्तात् प्रकल्पयेदिति सन्तानतरौ योजयन्ति, तन्मते तत्प्रतिमैव कर्त्तव्या । "मन्दारं दक्षिणे पार्श्वे श्रिया सार्द्धं घृतोपरि । पश्चिमे पारिजातन्तु सावित्र्या सह जीरके । सुरभीसंयुतं तद्वत्तिलेषु हरिचन्दनम् । तुरीयांशेन कुर्वीत सौम्येन फलसंयुतम्" । श्रीलक्षणमुक्तं ब्रह्माण्डदाने, सावित्रीलक्षणमाह नारदः "पद्मासना च सावित्री साक्षसूत्र-कमण्डलुः" । सुरभीलक्षणं ब्रह्माण्डपुराणे "सवत्सा सुरभी, धेनुरारक्ता प्रस्तुतस्तनीति, "सौम्येन, उत्तरेण । घृतादीनामपि परिमाणापेक्षायां तद्वदिति वचनात् वह्नि-धानाञ्च प्रस्थपरिमाणत्वमवधेयम् । "कौषेयवस्त्रसंयुक्तानिक्षुमाल्यफलान्वितान् । तथाष्टौ पूर्णकलशान् पादुकासनभाजनम् । दीपकोपानहच्छत्रचामरासनसंयुतम् । फलमाल्ययुतं तद्वदुपरिष्टाद्वितानकम् । तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्" । अशनभाजनं, भोज्यान्वितभाजनं वितानं पञ्चवर्णम् । अथ पूर्व्ववत् पूर्व्वेद्युरधिवासनं विधाय प्रभूते ब्राह्मणवाचनादिपूर्णाहुतिपर्य्यन्तं कर्म्मैव समापयेत् । "होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः । त्रिःप्रदक्षिणमावृत्य मन्त्रमेतमुदीरयेत् । नमस्ते कल्पवृक्षाय चिन्तितार्थप्रदायिने । विश्वम्भराय देवाय नमस्ते विश्वमूर्त्तये । यस्मात् त्वमेव विश्वात्मा ब्रह्मा स्थाणुर्दिवाकरः । मूर्त्तामूर्त्तं परं बीजमतः पाहि सनातनः । त्वमेवामृतसर्व्वस्वमनन्तः पुरुषोऽव्ययः । सन्तानाद्यैरुपेतः सन् पाहि संसारसागरात्" । अमृताः देवाः तेषां सर्व्वस्वं, अमृतसर्व्वस्वम् । "एवमामन्त्र्य तं दद्यात् गुरवे कल्पपादपम् । चतुर्भ्यश्चापि ऋत्विग्भ्यः सन्तानादीन् प्रकल्पयेत्" । दानवाक्यमत्र तुलापुरुषोक्तमूहनीयं, चतुर्भ्यः प्रकल्पयेदित्येकैकशो दद्यादित्यर्थः । चतुर्भ्य इतिवचनादत्र चतुर्णामेवर्त्विजां वरणमिति गम्यते ऋत्विगष्टकपक्षे तु ऋत्विग्भ्य इति ऋत्विग्युग्मेभ्य इत्यर्थः । एतस्मिंश्च पक्षे जापकादिभ्योऽन्यैव दक्षिणा दातव्या । वेदचतुष्टयापेक्षया चतुःसंख्यात्वमिदमृत्विजामिति केचित् । इहापि "प्राप्य तेषामनुज्ञाञ्च तथान्येभ्योऽपि दापयेदिति" बोद्धव्यम् । दक्षिणानिर्णयश्च पूर्व्ववत् । "स्वल्पेष्वेकाग्निवत् कुर्य्याद् गुरवे चाभिपूजनम् । न वित्तशाठ्यं कुर्वीत न च विस्मयवान् भवेत्" । स्वल्पत्वविवरणमुक्तं ब्रह्माण्डदाने । ततः पुण्याहवाचने कृते वेदिसमीपं गत्वा कृतदेवपूजो यजमानो गुरुश्च पूर्व्ववदेव देवताविसर्जनं कुर्य्यात् । "अनेन विधिना यस्तु महादानं निवेदयेत् । सर्व्वपापविनिर्म्मुक्तः सोऽश्वमेधफलं लभेत् । अप्सरोभिः परिवृतः सिद्धचारणपन्नगैः । भूतान् भव्यांश्च मनुजांस्तारयेद्रोमसंमितान् । स्तूयमानो दिवःपृष्ठे पितृपुत्त्रप्रपौत्त्रकान् । विमानेनार्कवर्णेन विष्णुलोकं स गच्छति । दिवि कल्पशतं तिष्ठेद्राजराजो भवेत् ततः । नारायणबलोपेतो नारायणपरायणः । नारायणकथासक्तो नारायणपुरं व्रजेत् । यो वा पठेत् सकलकल्पतरुप्रदानं यो वा शृणोति पुरुषोऽल्पधनः स्मरेद्वा । सोऽपीन्द्रलोकमधिगम्य सहाप्सरोभिर्मन्वन्तरं वसति पापविमुक्तदेहः" ।

इति मत्स्यपुराणोक्तकल्पतरुदानविधिः। तत्रैव विष्णुपुराणे, "सनत्कुमार उवाच। अथान्यत् सं प्रवक्ष्यामि कल्पपादपमुत्तमम्। यत्तनिक्षेप कर्त्तव्यं सर्वशस्यसमन्वितम्"। सर्वशाखाः, सर्वदिगन्तशाखाः। "शाखाभिः विधिना कृत्वा मुक्तादाम प्रलम्बितम्। दिव्यैर्नानारत्नैश्चैव चाङ्कुराणि प्रविन्यसेत्"। दिव्यैः, उत्कृष्टैरित्यर्थः। "प्रवालङ्कारयेद्धीमान् प्रवालेन द्रुमस्य च"। प्रवालेन प्रवालङ्कारयेदिति, विद्रुमैर्नवपल्लवान् कारयेदित्यर्थः। "फलानि पद्मरागैश्च पारिजातस्य शोभनम्। मूलदण्डञ्च नीलेन वज्रेण स्कन्धमुत्तमम्। वैदूर्य्येण द्रुमाग्रञ्च पुष्परागेण मस्तकम्"। स्कन्धादूर्द्धभागो मस्तकं, तदूर्द्ध्वं, द्रुमाग्रम्। "गोमेदकेन वै स्कन्धं सूर्य्यकान्तेन सुव्रतः। चन्द्रकान्तेन वा वेदिं द्रुमस्य स्फटिकेन वा। वितस्तिमात्र आयामो वृक्षस्य परिकीर्त्तितः। शाखाष्टकसमानस्तु विस्तारस्तोऽर्द्धतस्तथा"। शाखाव्यतिरिक्तस्य वृक्षस्य वितस्तिमात्र उच्छ्रायः कार्य्यः, ऊर्द्धतस्तथेति, स्कन्धादूर्द्धतो नवमी या मध्यमशाखा तस्या अपि वितस्तिमात्र उच्छ्रायः, शाखाष्टकसमानं विस्तारमिति, अष्टदिग्गतानामष्टशाखानां विस्तारं तिर्य्यग्व्याप्तिं वितस्तिमात्रमेव कुर्य्यादित्यर्थः। "तन्मूले स्थापयेद्विष्णुं लोकपालसमावृतम्। पूर्व्वोक्तवेदिमध्ये तु मण्डले स्थाप्य पादपम्। पूजयेद्देवमीशानं लोकपालांश्च यत्नतः। पूर्व्वं कल्पद्रोमाद्यन्तुलाभारवदाचरेत्। निवेदयेद्द्रुमं सम्यग्ब्राह्मणाय वा नृप!। ब्राह्मणेभ्योऽथवा राजा सार्व्वभौमो भविष्यति"। तुलाभारवदाचरेदिति विष्णुपुराणोक्ततुलापुरुषदानविहितविधिमाचरेदित्यर्थः। स्थानान्तरे। "फलानान्तु सहस्रेण कल्पयेत् कल्पपादपम्। समूलदण्डपत्रञ्च फलपुष्पसमन्वितम्। पञ्चस्कन्धन्तु संकल्प्य पञ्चानां स्थापयेत् सुधीः। सद्योजातेन मन्त्रेण देवं पाद्यं शिवायतः। दिव्यैर्विमानैर्देहान्ते शिवलोके महीयते। पितरस्तस्य मोदन्ते सत्यलोके महीपते!"। इति विष्णुपुराणोक्तकल्पपादपदानविधिः।

**कल्पपाल** पुं० कल्पं सुराविधानकल्पं संकल्पं मद्याभिलाषं वा तत्पायिनां, पालयति पाल—अण्। शौण्डिके सुराजीवे हेमच०। कल्यपाल इत्येव पाठः साधुः।

**कल्पलता** स्त्री क्लृप—णिच्—कर्म्मणि अच् कर्म्म०। महादानान्तर्गते स्वर्णकल्पितलताकारे दानीयद्रव्यभेदे तद्विधिः हेमा० दा० मत्स्यपु० उक्तो यथा—

"अथातः सम्प्रवक्ष्यामि महादानमनुत्तमम्। महाकल्पलता नाम महापातकनाशनम्। पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम्। ऋत्विङ्मण्डपसम्भारभूषणाच्छादनादिकम्। तुलापुरुषवत् कुर्य्यात् लोकेशावाहनादिकम्"। आदिग्रहणव्याख्यानं पूर्व्ववत् (कल्पपादपोक्तवत्)। "चामीकरमयीः कुर्य्यात् दश कल्पलताः शुभाः। नानापुष्पफलोपेता नानांशुकविभूषिताः। विद्याधरसुपर्णानां मिथुनैरुपशोभिताः। हारीतादिखगैः चित्रैः फलानि च विहङ्गमैः"। चामीकरं, सुवर्णं कल्पलतास्तु लताकारा विधेयाः। नानाफलानि, पुंस्त्रीगोगजवाजिप्रभृतीनि, सकृपपुष्पफलानां तुलनार्थत्वेनैवोपपत्तेः। अंशुकानि, वस्त्राणि। सुपर्णाः पक्षिणः। एवं दश कल्पलता विधाय वेदिकायाम् विलिखितचक्रस्योपरि मध्ये द्वयं, पूर्व्वादिदिक्षु चाष्टौ स्थापयेत्। "लोकपालानुकारिण्यः कर्त्तव्यास्तासु देवताः। ब्राह्मीमनन्तशक्तिञ्च लवणस्योपरि न्यसेत्। अधस्तात्तु तयोर्मध्ये पद्मशङ्करे शुभे"। लोकपालानुकारिण्यो देवता, लोकपालशक्तय इत्यर्थः। अधस्तात्तु तयोरिति, मध्यस्थापितयोः कल्पलतयोरधस्तात् पद्मकरां ब्राह्मीं, शङ्खधरामनन्तशक्तिञ्च स्थापयेत्। लवणादिपरिमाणञ्च, परिमाणविशेषानिर्द्देशात् स्वेच्छया नियम्यते। पद्मस्तूपयोर्न्यसेदिति क्वचित् पाठः। तत्र स्तूपो राशिः द्विवचनं राशिद्वयापेक्षयेति। "इभासनस्था तु शुभे पूर्व्वतः कुलिशायुधा। रजध्वजशिखाऽऽग्नेयी स्रुवपाणिरथानले। याम्या महिषमारूढा गदिनी तत्कुलोपरि। प्रेतेन नैर्ऋती खड्गा सखड्गा दक्षिणापरे। वारुणे वारुणी धीरे झषस्था नागपाशिनी। पताकिनी च वायव्ये मृगस्था शर्करोपरि। सौम्या निधेषु संस्थाप्या शङ्खिनी निधिसंस्थिता। माहेश्वरी वृषगता शूलपाणिः त्रिशूलिनी"। इभो गजः स च वाहनोऽविधेयः, कुलिशं, वज्रं, रजध्वजशिखेति, रजनी, हरिद्रा, अजः, छागः, हरिद्रीपरिस्थापिता छागवाहनेत्यर्थः; अनले, आग्नेयदिग्भागे, दक्षिणापरे नैर्ऋतदिग्भागे नैर्ऋती प्रेतवाहनेत्यवधेयं, झषस्था मकरवाहनेत्यर्थः। निधिसंस्थितेति निधिरूपं कलसाद्युपरि। "मौलिन्योवरदास्तद्वत् कर्त्तव्या वाहनान्विताः। सर्वाः पञ्चफलादूर्द्ध्वमा सहस्रात् प्रकल्पयेत्। वस्त्रावाहपरिध्वाय पञ्चवर्णं वितानकम्। धेनवो दश कुम्भाश्च वस्त्रयुग्मानि चैव हि"। मौलिन्यो

"मारुतः कल्माष आग्नेयः कृष्णः" यजु०२९,५९। २कृष्णवर्णे ४कृष्णपाण्डुरवर्णे पु०५तद्वति त्रि०। ६राक्षसे च पुंस्त्री स्त्रियां जातित्वात् ङीष् मेदि०। वर्णवाचित्वे गौरा०पाठात् स्त्रियां ङीष्। ७गन्धशालौ पु० राजनि०। ८अग्निभेदे भारतम्। "अग्नीनां वासुदेवेन संसक्तानां महाक्रधे!। ते जातवेदसः सर्वे कल्माषः कुसुमस्तथा। दहनः शोषणश्चैव तपनश्च महाबलः" हरिवं० १८० अ०। ९नागभेदे "नीलानीलौ तथानागौ कल्माषशबलौ तथा" भा० आ० ३५ नागनामोक्तौ। १०कृष्णविन्दुचिते च। "कल्माषमिश्रेके" आश्व०स्ट०४,९,५। "कल्माषो नाम कृष्णविन्दुचितः" नारा०।

**कल्माषकण्ठ** पु० कल्माषः कृष्णपाण्डुरः कण्ठोऽस्य। महादेवे हारा०। तस्य स्वतः श्वेतवर्णत्वेऽपि विषपानकाले नीलकण्ठत्वात् तथात्वं कल्माषग्रीवादयोऽप्यत्र। "ध्रुवा दिग्विष्णुरधिपतिः कल्माषग्रीवो रक्षिता" अथ०३,२७,५। "ध्रुवाय त्वा दिशे विष्णवेऽधिपतये कल्माषग्रीवाय रक्षित्रे" अथ०१२,३,५९।

**कल्माषपाद** पु० कल्माषौ पादौ यस्य। सूर्य्यवंश्ये सुदासपुत्रे नृपभेदे। "हे भार्य्ये सगरस्यास्ताम्" इत्युपक्रम्य "अयुताजित्सुतस्त्वासीदृतपर्णो महायशाः। दिव्याक्षहृदयज्ञोऽसौ राजा नलसखो बली। ऋतपर्णसुतस्त्वासीदार्त्तपर्णिर्महीपतिः। सुदासस्तनयस्तस्य राजा इन्द्रसखोऽभवत्। सुदासस्य सुतस्त्वासीत् सौदासो नाम पार्थिव!। ख्यातः कल्माषपादो वै नाम्ना मित्रसहोऽभवत्" हरिवं०१५अ०। तस्य ब्रह्मशापात् राक्षसत्वप्राप्तेर्वशिष्ठेन शापविमोचनस्य च कथा भा०आ०१७७,७८०अ०यथा—

"कल्माषपाद इत्येवं लोके राजा बभूव ह। इक्ष्वाकुवंशजः पार्थ! तेजसाऽसदृशो भुवि। स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात्। मृगान् विध्यन् वराहांश्च चचार रिपुमर्द्दनः। तस्मिन् वने महाघोरे खड्गांश्च बहुशोऽहनत्। हत्वा च सुचिरं श्रान्तो राजा निववृते ततः। अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान्। स तु राजा महात्मानं वाशिष्ठमृषिसत्तमम्। तृष्णार्त्तश्च क्षुधार्त्तश्च एकायनगतः पथि। अपश्यदजितः सङ्ख्ये मुनिं प्रतिमुखागतम्। शक्तिं नाम महाभागं वशिष्ठकुलवर्द्धनम्। ज्येष्ठं पुत्रं पुत्रशताद्वशिष्ठस्य महात्मनः। अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत्। तथा ऋषिरुवाचैनं सान्त्वयन् श्लक्ष्णया गिरा। मम पन्था महाराज! धर्म्म एष सनातनः। राज्ञा सर्व्वेषु धर्म्मेषु देयः पन्था द्विजातये। एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः। अपसर्पापसर्पेति वागुत्तरमकुर्व्वताम्। ऋषिस्तु नापचक्राम तस्मिन् धर्म्मपथे स्थितः। नापि राजा मुनेर्मानात् क्रोधाच्चापजगाम ह। अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः। जघान कशया मोहात्तदा राक्षसवन्मुनिम्। कशाप्रहाराभिहतस्ततः स मुनिसत्तमः। तं शशाप नृपश्रेष्ठं वाशिष्ठः क्रोधमूर्च्छितः। हंसि राक्षसवद्यस्माद्राजापसद! तापसम्। तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि। मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम्। गच्छ राजाधमेत्युक्तः शक्तिना वीर्य्यशक्तिना। ततो याज्यनिमित्तन्तु विश्वामित्रवशिष्ठयोः। वैरमासीत्तदा तन्तु विश्वामित्रोऽन्वपद्यत। तयोर्विवदतोरेवं समीपमुपचक्रमे। ऋषिरुग्रतपाः पार्थ! विश्वामित्रः प्रतापवान्। ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः। ऋषेः पुत्रं वशिष्ठस्य वशिष्ठमिव तेजसा। अन्तर्द्धाय तदात्मानं विश्वामित्रोऽपि भारत!। तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियम्। स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः। जगाम शरणं शक्तिं प्रसादयितुमर्हयन्। तस्य भावं विदित्वा स नृपतेः कुरुसत्तम!। विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति। शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया। राक्षसः किङ्करो नाम विवेश नृपतिं तदा। रक्षसा तं गृहीतन्तु विदित्वा मुनिसत्तमः। विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम!। ततः स नृपतिस्तेन रक्षसान्तर्गतेन च। बलवत्पीडितः पार्थ! नान्वबुध्यत किञ्चन। ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनम्। अयाचत क्षुधापन्नः समांसं भोजनन्तदा। तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा। 'आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्त्तं प्रतिपालयन्। निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम्। इत्युक्त्वा प्रययौ राजा तस्थौ स द्विजसत्तमः। ततो राजा परिक्रम्य यथाकामं यथासुखम्। निवृत्तोऽन्तःपुरं पार्थ! प्रविवेश महामनाः। ततोऽर्द्धरात्र उत्थाय सूदमानाय्य सत्वरम्। उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम्। गच्छामुष्मिन् वनोद्देशे ब्राह्मणो मां प्रतीक्षते। अन्नार्थी त्वं तमन्नेन समांसेनोपपादय। गन्धर्व्व उवाच। एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित्। निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः। राजा तु रक्षसा-

